॥ श्रीः ॥

# ललितास्तवरत्नम्



महामुनीन्द्रेण भगवता —
श्रीदुर्वाससा निर्मितम्

श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठम्
(शैवदर्शनपरियोजना)
जम्मूपुरम्

❀ श्रीः ❀

# LALITA-STAVA-RATNA

BY

SAGE–DURVASAS



*Commentator*

DR. B. N. PANDIT

*Editor*

SHRI BRAJNANDAN SHARMA

*Published by*

Principal—(Dr. Murlidhar Pandeya),

SRI RANVIR KENDRIYA SANSKRIT VIDYAPEETHA,

JAMMU.

*The first flutter of—*

SAIVA DARSANA PROJECT



द्वैतं यत्रानघेध्मं

पशुरधिपिशितो मृत्युरक्षाणि जिह्वा,

हव्यान्यर्थाः प्रबोधः

प्रकटहुतवहो निर्मलात्मैव होता ।

अध्वर्युः स्वच्छचेतो

गुरुमुखविदितो मातृकोद्गातृवर्गः,

स्वाचार्यो देशिकेन्द्रः

परमखभुगसि त्वं परः शम्भुरीश ।।

(भगवद्दुर्वाससः परशम्भुमहिम्नस्तोत्रम्—५—११)

अनघेध्मम्=स्वच्छसमिद्भारः । अधिपिशितो=सुमांसलो यमराजः पशुः जिह्वाः अग्नेः । अर्थाः=विषयाः । निर्मलः आत्मा होता । स्वच्छं चित्तम् अध्वर्युः । आदि-क्षान्ता मातृका उद्गातृवर्गः । गुरुराचार्यः=ब्रह्मा यज्ञे । परयज्ञभोक्ता त्वमसि हे ईश ।

॥ श्रीः ॥

# ललितास्तवरत्नम्

महामुनिना **श्रीदुर्वाससा** विरचितम् ।



टीकाकारः—डा० बलजिन्नाथपण्डितः

सम्पादकः—श्री ब्रजनन्दनशर्मा

प्रकाशकः—डा० मुरलीधरपाण्डेयः, प्रधानाचार्यः

श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य,
जम्मूपुरस्थस्य ।

(शैवदर्शनपरियोजनायाः प्रथमः परिस्पन्दः ।)

# श्रीचक्रम्



बिन्दुत्रिकोणवसुकोण-दशार-युग्म-
मन्वस्र-नागदल-सङ्गत-षोडशारम् ।
वृत्तत्रयं च धरणी-सदन-त्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

# ॥ श्रीदेशिकदर्शनम् ॥

आचार्यामृतवाग्भवप्रणीतम् ।

## दुर्वाससो वर्णनम्

तप्तकाञ्चनगौराभः प्रांशुदेहः कृशाङ्गवान् ।
मधुपिङ्गलतारावद्विशालनयनाञ्चितः ॥१॥
पिशङ्गवर्णकेशाढ्यः शुकनासो बृहच्छ्रवाः ।
लोमवत्सर्वगात्रोऽसौ लम्बकूर्चो महाभुजः ॥२॥
दीर्घश्मश्रुः स्निग्धवर्णश्चापभ्रूः शुभ्रदन्तधृक् ।
विशालभालः स्मेरास्यः सुकपोलः प्रसन्नदृक् ॥३॥
किञ्चिल्लम्बाननः कम्बुग्रीवः पृथुलमस्तकः ।
महाहनुः शोणपाणिः शोणपादो वृकोदरः ॥४॥
जानुदघ्नमधोवासो वसानश्चोत्तरीयकम् ।
किञ्चिन्मलिनमश्वेतमपि प्रयतमुत्तमम् ॥५॥
दक्षिणं पाणिमुद्धृत्य वसानो ब्रह्मसूत्रवत् ।
रुद्राक्षमालिकां कण्ठे मूर्धन्यपि च धारयन् ॥६॥
रुद्राक्षवलये सौम्ये दधानो मणिबन्धयोः ।
भस्मत्रिपुण्ड्रमलिके रुद्राक्षौ श्रोत्रयोरपि ॥७॥
प्रशान्तधीः प्रसन्नात्मा त्रिकालज्ञो महामुनिः ।
निग्रहानुग्रहौ कर्त्तुं मवतीर्णो महीतले ॥८॥
धर्ममूर्त्तिरयं साक्षान्निगमागममर्मवित् ।
दुर्वासा भगवान् शम्भुः प्रथमो देशिकः सताम् ॥९॥

स्वरसेन स्वाभिनये प्रायोऽयं कोपमुख्यताम् ।
स्वीकृत्य कुरुते नाट्यं लोकानुग्रहकारकम् ॥१०॥
कोपभट्टारक इति ततोऽयं सुप्रथामगात् ।
महानुग्रहरूपो मे देशिकः शाक्तदर्शने ॥११॥
श्रीविद्यासमुपासनां प्रथयितुं सत्सम्प्रदायक्रमात्,
शिष्टानुग्रहणाय दुष्टनिकरोच्छेदाय योऽत्रातरत् ।
साक्षाद्दर्शयितुं समस्तजगतामात्मानमात्मप्रथं
दुर्वासा भगवान् सदा विजयतां श्रीमान् स्वरूपो गुरुः ॥१२॥
कश्मीराभिजनाय विज्ञवलजिन्नाथाय गोप्यं परं
वक्तुं वर्णनमेतदस्ति रचितं दुर्वाससः श्रीमतः ।
यो मां षोडशवर्षमात्रमतुलं कारुण्यमालम्ब्य सद्
दत्त्वा दर्शनमग्र्यमध्यगमयच्छैवं रहस्यं परम् ॥१३॥
दुर्वाससा भगवता मयि दीनदीने
कृत्वा दयां यदिह दर्शनमस्ति दत्तम् ।
तद्वर्णितं ननु यथामति तत्र सन्त—
स्तुष्यन्तु तेऽपि च यथारुचि संरमन्ताम् ॥१४॥
दुर्वाससो भगवतो वर्णनं पुण्यकारकम् ।
आचार्यपदमारूढो व्यधादमृतवाग्भवः ॥१५॥
नन्देन्दुशून्याक्षिमिते गते वैक्रमवत्सरे ।
एकादश्यां शुचौ शुक्ले रचितं बुधवासरे ॥१६॥
कर्मणानने भगवान् दुर्वासाः प्रीयतां मम ।
स्वकल्याणं साधयन्तु पठित्वेदं जना इह ॥१७॥

इति सर्वतन्त्रस्वतन्त्र-महामहिम-आचार्य-
श्रीमदमृतवाग्भवनिर्मितं श्रीदेशिकदर्शनम् ॥





## डा० मुरलीधर पाण्डेयः

प्रधानाचार्यः
जम्मूस्थ रणवीर केन्द्रीय संस्कृत
विद्यापीठस्य


महर्षिदुर्वाससा प्रणीतं श्रीललितास्तवरत्नं पण्डितश्रीबलजिन्नाथ-शास्त्रिकृतव्याख्यया संवलितं विदुषां पुरस्तात् प्रस्तुवन्नतीव प्रमोदमनुभवामि। इदं ग्रन्थरत्न न केवलं तान्त्रिकसम्प्रदायस्यामूल्यो निधिः किन्तु काव्यरसिकानां कृतेऽपि कण्ठहाररूपम्। अत्र श्रीयन्त्रस्य तत्रत्यानामपरेषाञ्च विविधानां चक्राणां चक्राधिष्ठातृदेवतानाञ्च मनोहारिण्या काव्यशैल्या वर्णनं कृतमस्ति।

साक्षात्कृतदुर्वासोमुनेः दुर्वाससः प्राप्तकाश्मीरिकशैवागमदीक्षाविधेः श्रीमदमृतवाग्भवाचार्यस्य या दुर्लभानुभूतिः साप्यत्र विदुषा ग्रन्थसम्पादकेन ग्रन्थारम्भ एव सन्निवेशिता स्वभूमिकायां च कृतोल्लेखा।

एतेनेदं ग्रन्थरत्नं भूयोऽपि परां प्रभामावहति। चिरकालपूर्वं प्रकाशितमिदं ग्रन्थरत्नमधुना सर्वथा दुर्लभमासीत्।

विदुषां कृतेऽस्य सुलभतां चिकीर्षमाणेन विद्यापीठेन काश्मीरशैवागमशास्त्रस्य लब्धप्रतिष्ठविद्वद्वरडा. बलजिन्नाथशास्त्रिद्वारा सुसम्पाद्येदं पुस्तक-प्रकाशितम्।

अतोऽहं विश्वसिमि यदिदं प्रकाशनं तन्त्रशास्त्राध्येतॄणां काश्मीरकशैवागमजिज्ञासूनां च कृते महदुपकारकं भविष्यति। अस्य ग्रन्थरत्नस्योपयोगिताविषये तन्त्रशास्त्ररसिकाः शैवागमविचक्षणाः सरस्वतीपादचर्यापूतान्तःकरणाः विद्वद्वरा एव प्रमाणम्।

आश्विन पञ्चम्याम् —मुरलीधर पाण्डेयः

२०३८ वैक्रमसम्वत्सरम्/३-१०-१९८१

## आभारप्रदर्शनम् ।

अस्य स्तोत्ररत्नस्य प्रकाशनकार्ये यन्मया व्यवसितं तत्र सर्वप्रथममहं निजगुरुवर्याणाम् आचार्यामृतवाग्भवानाम् ऋणी येषां कृपया मम परिचय एवंविधैर्ग्रन्थरत्नैः सह जातः ।

चिरपरिचितमपि ममैतत् स्तोत्ररत्नं यदद्यावधि पाठमात्रविषयतामेवाप्तं सदिदानीं सरलया टीकयालङ्कृत्य पुनः प्रकाशनविषयतामप्युपगतं तत्र राष्ट्रियसंस्कृतसंस्थानस्य निदेशकमहोदयानां श्री डा० रामकरणशर्मणां गुणैकपक्षपातिता मुख्यं निमित्तं यया प्रेरितैस्तैः सत्स्वापि प्रकाशनीयेषु बहुषु ग्रन्थान्तरेष्वस्य सुमनोहरकाव्यात्मकस्य शास्त्रतत्त्वनिर्देशगर्भस्य स्तोत्ररत्नस्य सत्वरमेव प्रकाशनाय विशेषप्रोत्साहनकरी स्वीकृतिः प्रदत्ता यथाकालम् ।

श्रीरणवीरविद्यापीठाधिकारिणोऽपि सहयोगदानने प्रकाशनकार्ये साहाय्यमनुष्ठितवन्त इति तेऽपि धन्यवादार्हाः । शैवदर्शनकोशपरियोजनायामनुसन्धातृत्वेन कर्म समाचरन्तोऽपि विद्वांसो धन्यवादमर्हन्ति येषां सहयोगेनेदं कार्यं साधु सम्पन्नम् ।

१५-८-१९८१

बलजिन्नापण्डितः,
शोधनिदेशकः,
शैवदर्शनकोशपरियोजनायाः ।

# प्रास्ताविकम् ।

**जयति शिवः स्वच्छन्दं क्रीडन् बन्धैश्च मोक्षैश्च ।**
**जयति तदनु दुर्वासाः शैवं शास्त्रं भुवि प्रथयन् ।**

आगमिकानां शैवशाक्तोपासनपद्धतिरूपाणां भोगमोक्षसाधनानां प्राचीनाः गुरवस्तावदगस्त्य-लोपामुद्रा-दत्तात्रेय-परशुराम-दुर्वासःप्रभृतयो महामुनयः। तेषु भगवान् दुर्वासाः कैलासवासिनः श्रीकण्ठनाथाख्यस्य शिवस्य साक्षाच्छिष्यः। परब्रह्मपदवाच्यः परमेश्वरस्तावत् परमशिवः। स एवं विश्वोत्तीर्णे स्वरूपे शिवभट्टारक इति व्यपदिश्यते। विश्वमयतायाः समुदयस्य प्रथमोन्मेषे तस्यैवानाश्रितशिव इति संज्ञा पारिभाषिकी। भेदाभेदभूमिकात्मके शुद्धविद्याक्षेत्रेऽवतीर्णः स एवान्तर्मुखतायाः प्राधान्ये सदाशिवभट्टारक इति वहिर्मुखतायाश्च प्राधान्य ईश्वरभट्टारक इति परिभाष्यते। वहिर्मुखतायाः स्फुटव्यक्तावेव परमेश्वरस्य सृष्ट्यादिसामर्थ्यरूपा सृष्ट्यादिस्वभावतारूपा च परमेश्वरता नितरामभिव्यक्तिमुपयातीति तदवस्थाप्राधान्य एव तस्येश्वर इति व्यपदेशो, न पुनः सदाशिवादिरूपतायाम्।

ईश्वरभट्टारक एव शुद्धविद्याया निम्नतरं क्षेत्रं महामायापरपर्यायमवतीर्णः सन्ननन्तनाथ इति वाऽघोरेश इति वा परिभाष्यते। स एव भोगलोलुपानां सांसारिकाणां जीवानां भोगसिद्ध्यर्थं मायां प्रक्षोभ्य भोगसिद्ध्युपयोगीनि कलाविद्यादि-कञ्चुकतत्त्वानि भोक्तृरूपं च पुरुषतत्त्वं भोग्यं च प्रकृतितत्त्वं सृजति। स्फुटतरभोगविशेषसिद्ध्यर्थं भगवानीश्वरभट्टारकः प्रकृति-

तत्त्वमवतीर्य तत्र भगवच्छ्रीकण्ठनाथरूपतया प्रकटीभवति । श्रीकण्ठनाथः स्फुटतरभोगसिद्धयर्थं करणकार्यतत्त्वानि स्रष्टुं प्रकृतौ गुणवैषम्यं विधातुं तां प्रक्षोभयति । प्रक्षुब्धा च प्रकृतिर्विविधाकारकेण गुणवैषम्येण त्रयोदशकरण-रूपतायां पञ्चतन्मात्ररूपतायां पञ्चभूतरूपतायां च परिणाममधिगच्छति भगवंच्छ्रीकण्ठनाथप्रेरणया । सृष्टेष्वेतेषु सूक्ष्मस्थूलतत्त्वेषु ब्रह्मविष्णुरुद्रास्तेभ्यो लोकलोकान्तराणां, विविधानां शरीराणां, भोग्यानां च भावानां सृष्टि-स्थिति-संहारान् सततं प्रकुर्वन्ति। प्रकृतितत्त्वे भगवाञ्छ्रीकण्ठनाथः मूर्तिद्वयेन तिष्ठन्न-धिकारं स्वं निर्वहति । तच्च तस्य मूर्तिद्वयं क्रमेण क्रियाप्रधानं ज्ञानप्रधानं च । तत्र ज्ञानप्रधाना मूर्तिः स्वयं श्रीकण्ठनाथ इति, क्रियाप्रधाना चोमापतिनाथ इति व्यपदिष्टाऽऽगमशास्त्रेषु । तेनेश्वरतायाः स्फुटतरं व्यवहारमुमापतिनाथ एव सञ्चालयति । असावुमापतिनाथ एव हि स कैलासवासी शिवो यस्य चरितं महाभारतपुराणादिषु गीतं प्राक्तनैर्ऋषिभिः । यस्य श्रीकण्ठनाथस्य शिष्य उमापतिनाथस्तस्यैव शिष्यो दुर्वासाः । एतत् खलु विशेषमाहात्म्यं दुर्वाससः ।

भगवता श्रीकण्ठनाथेनेह जगति मुमुक्षूनुद्धर्तुं सर्वासामपि रहस्यभूतानां विद्यानां ज्ञानं विज्ञानं च भगवते दुर्वाससे प्रदत्तम् । तेनासौ पुरातनो मोक्षविद्या-गुरुः काले काले योग्येष्वधिकारिजनेष्वनुग्रहं कुर्वन् चिरादत्र लोके मोक्षमार्ग-लीलां वितन्वन् विजयते । कदाचित् कदाचित् कानपि दुर्मदान् जिज्ञासून् प्रबोधयितुमसावापाततः क्रोधस्याप्यभिनयं करोति । तेन च क्रोधभट्टारक इत्याख्यायते । परं तस्य क्रोधोऽप्यनुग्रह एव । क्रोधं विदधानोऽप्यसौ जनं मोक्षमार्गे एव प्रवर्तयति । तेनासौ सर्वथाप्यनुग्रहमूर्त्तिरेव वस्तुतः । तस्य क्रोधो जननीरोष इव शिशुं प्रति हितकर एव मन्तव्यः । किञ्च कवि-भिस्तस्य स्वभावतः क्रोधित्वं निजकाव्यकलया बहुतरं कल्पितमेव वेदितव्यम् । अत्रोदाहरणं यथा—

कामलम्पटस्य कण्वरोषभीतस्य स्वार्थसाधकस्य परपीडाविचार-रहितस्य च दुष्यन्तस्य तथैव कामोपभोगे लघुतरमपि कालक्षेपमसहमानायाः शकुन्तलायाश्च चारित्रदोषान् गुणतामारोपयितुमुदात्ततया च तौ प्रकटयितुं

महाकविना कालिदासेन महाभारतीये आख्याने स्वकल्पनया महत् परिवर्तनं विधाय नायकनायिकयोर्दुःखपारावारस्य मूलकारणत्वेन दुर्वाससा प्रदत्तस्य शापस्य कल्पना कृता । एतच्च महाभारतीयस्याख्यानस्याभिज्ञानशाकुन्तलस्य च तुलनात्मिकया दृष्ट्या मनाग्विचारणेन नितरां स्पष्टतां याति । महाकविना स्वकल्पनया स्वभावक्रोधनत्वदोषो दुर्वाससि समारोपितः; तेन च नायकस्य महादोषाः नितरां निगूहिताः । तत एवासौ धीर-ललितनायकपदव्यामारोपितः सन्निदानीमप्युदात्तेषु नायकेषु विजयते । एवमेव बाणभट्टेन सरस्वत्या भूतलेऽवतरणस्य कारणत्वेन दुर्वाससः शापस्य कल्पना कृता महता प्रयत्नेन । एषा तावत् सरणिः शैवानां कवीनाम् । का पुनर्वार्ता शिवभक्तविरोधिनां केषामपि सङ्कुचितदृष्टीनां वैष्णवजैनबौद्धानां लेखकानाम् । एवंविधाः सुप्रभूताः शापवृत्तान्ताः तैस्तैः पुराणप्रक्षेपकलेखकैरपि कल्पिता वेदितव्याः ।

भगवतो दुर्वाससोऽनुग्रहमूर्त्तित्वमद्यतनेऽपि युगे क्वचित् क्वचित् प्रकटीभवति । आत्मविलासादिशास्त्रनिर्मातृभिस्तत्रभवदाचार्यामृतवाग्भवैर्निजे देशिकदर्शने सिद्धमहारहस्ये च भगवद्दुर्वाससा कृतस्याकारणानुग्रहस्य वर्णनं कृतं वर्तते । ते चाचार्यमहादेयाः भगवद्दुर्वासस एवानुग्रहेण अतिवाञ्छनीयं जीवनफलमवाप्येदानीमत्र भूतले स्वात्मारामतया स्वच्छन्दं विचरन्तो विजयन्ते ।

काश्मीरशैवदर्शनस्याद्यो गुरुर्भगवान् दुर्वासा एव । यथा च तेन भगवता भगवच्छ्रीकण्ठनाथाज्ञया त्र्यम्बकादित्यनाम्नो मानसपुत्रस्य माध्यमेनाद्वैतशैवदर्शनस्य सिद्धान्तानां प्रयोगविधीनां च पुनः प्रवर्तनं कृतं तथा तावद् विस्तरतः श्रीसोमानन्दनाथकृतायां शिवदृष्टौ सप्तम आह्निके द्रष्टव्यं सुधीभिः । भगवद्दुर्वाससा कृतं किमपि दर्शनपुस्तकं नैव लभ्यते । परं तत्कृतं स्तोत्रत्रयमिदानीमप्युपलभ्यत एव । त्रितयमपि दर्शनसिद्धान्तगर्भम् योगप्रक्रियानिर्देशकञ्च । स्तोत्रात्मकमपीदं काव्यत्रयमुत्कृष्टतरशास्त्रपदवीमारोढुमलम् । मुद्रितमप्येतत् स्तोत्रत्रयं नैव बहुतरजनविदितम् । विरलविरला एव शिवानुग्रहपात्रभूता भक्तजनास्तदभिज्ञाः । तेष्वेकं तावत् शिवस्तोत्रं द्वौ च शक्तिस्तवौ ।

शिवस्तोत्रं तावत् परशम्भुमहिम्नस्तवः इति नाम्नाभिहितम् । तच्च

मद्रपुरे अदयारपुस्तकालयाद् द्विवारं प्राकाश्यमुपगतम्,पे गूढमेव तिष्ठति । मुद्रितं पुस्तकमापणेषु क्वचित् क्वचिद् विद्यमानमपि न बहुतरविद्वद्विदितम् । यच्च लोके प्रसिद्धं **महिम्नो नापरा स्तुतिः** इति तदपि वस्तुतः परशम्भुमहिम्नस्तवस्यैव कृते वेद्यम् । अतिविस्तीर्णं बहुतरप्रकरणप्रविभक्तं सदेतत् स्तोत्रं बहुषु स्थलेषु सुतरां क्लिष्टम् । अपपाठोऽपि कदाचित् स्यात् क्वचित् क्वचित् क्लिष्टताकारणम् । स्तोत्रस्य पाण्डुलिपिद्वयं शारदाक्षरलिखितं मया श्रीनगर्यां दृष्टम् । पाठभेदा मया तत्र तत्र निबद्धाः । स्तोत्रस्यास्य तुलनात्मकस्य मूलपाठस्य पुनः सम्पादनं कर्तुमस्ति मे विचारः । तस्मिन् कर्मणि सम्पन्ने सति कदाचित् स्तोत्रस्य टीकापि निर्मास्यते चेच्छिवस्तथानुमन्येत ।

शक्तिस्तोत्रद्वयमध्ये काव्यमालाया एकादशे गुच्छके सटीकं **त्रिपुरामहिमस्तोत्रम्** प्रकाशितमभूत् पुरा । तदनन्तरमस्य स्तोत्रस्य द्वितीतं संस्करण तमिलभाषानुवादसहितं प्रकाशितमभूद्दक्षिणदेशे । तृतीयमस्य संस्करणं मध्यप्रदेशे दतियापत्तने पीताम्बरापीठेन हिन्दीभाषानुवादसहितं प्रकाशितमभवत् । वाराणस्यां प्रतिष्ठिते सस्कृतविश्वविद्यालये तन्त्रसंग्रहस्य प्रथमे भागे पुनः सटीकं मुद्रितमेतत् स्तोत्रं तत्र लभ्यम् । परं पृथक्पुस्तकरूपेण त्रितयमपीदानीं दुरवापम् । संस्कृतटीकायुतमपि देशभाषाद्वयानुवादसहितमपि च क्वचित् क्वचिदतीव दुरूहमिदं स्तोत्रं, बहुतरमन्त्रगर्भत्वात् । तदेतत् स्तोत्रमपि सुबोधाटीकायुतं प्रकाशनमर्हति ।

भगवद्दुर्वाससो द्वितीयं जगदम्बास्तोत्रं तावद् ललितास्तवरत्नम् इति नाम्ना ख्यातम् । एतत् पुरा काव्यमालायाः दशमे गुच्छके सपाठभेदनिर्देशं प्रकाशितमभूत् । परमिदानीं दुरवापम् । अस्य पाठोऽपि क्वचित् क्वचिच्छोधनमर्हति । सामान्यत एतत् स्तोत्रं नातिदुरूहम् । बहुतरवृत्त्यनुप्रासबहुलत्वेनैतत् स्तोत्रमतीव श्रुतिमधुरम् । अनुप्रासानुकूल्यप्रयोजनार्थमत्र कविना केषामप्यतीवाप्रसिद्धानां शब्दानां प्रयोगः कृतोऽस्ति । देशभाषापदान्यपि कुचित् क्वचित् प्रयुक्तानि । तेषां तथाविधानां पदानां संस्कृतेऽपि प्रयोगप्रथा देशान्तरेषु कालान्तरेषु चानुमातुं शक्यते । बहुतरदेशकालसम्बन्धो भगवद्दुर्वाससः चिरजीवित्वेन सिद्ध एव । अप्रसिद्धपदप्रयोगा अपि व्याकरण-

कोषादिसाहाय्येन सुबोधार्थाः सम्पद्यन्ते । क्वचित् क्वचिदत्रापाणिनीया अपि प्रयोगा लभ्यन्ते। ते तावत् कालाप-कौमारकाठकैन्द्रचान्द्रादिव्याकरणान्तरानुसारमतिप्राचीनेषु युगेषु देशविशेषेषु साधुत्वेन प्रचलिता मन्तव्याः। भगवद्दुर्वाससस्तत्तद्व्याकरणान्तरज्ञत्वं प्रयोगान्तरज्ञत्वं च साधयन्ति तथाविधाः पदप्रयोगाः। आर्याशतद्वयं त्रयोदशाधिकमस्य स्तवस्य शाब्दं परिमाणम्। आर्याणां तासां पदलालित्यं कविना स्वयमपि निर्दिष्टम्—

**ललिताया स्तवरत्नं ललितपदाभिः प्रणीतमार्याभिः ।**
**प्रतिदिनमवनौ पठतां फलानि वक्तुं प्रगल्भते सैव ॥** इति ।

(ल० स्त० र० २१३)

अत्र स्तवरत्ने समकालमेव ब्रह्माण्डचक्रस्य श्रीचक्रस्य च काव्यात्मकं वर्णनं कृतं कविना। श्रीचक्रं तावद् ब्रह्माण्डचक्रप्रतीकभूतमुपासनकर्मण्यालम्बनतां भजते साधकानां कृते। तत्र विन्दुं परितस्त्रिकोण-वसुकोण-दशकोणादिचक्राणां मण्डली अङ्किता वर्तते। परितश्च मण्डलत्रयं भूपुरत्रयं च। एषा सर्वापि चक्रमण्डली ब्रह्माण्डान्तर्गतविविधदैवताधिष्ठिततत्तत्सोपानक्रममभिव्यनक्ति। ललितास्तवरत्ने तेषां मण्डल-षोडशार-चक्रादीनां सुमेरुपर्वतस्थविविधप्राकारतया, प्राकरद्वयान्तर्गतस्थलतया च काव्यात्मकं वर्णनं कृतं वर्तते। स्थाने स्थाने च तत्तत्सोपानाधिष्ठातृदेवतानामप्यतीव सुन्दरं वर्णनं कृतमस्ति कविना। क्रमेण वैदिकपौराणिकतान्त्रिकादिदेवतानां तासां स्थानानां च सुन्दरतरं वर्णनं विधायान्ते सुधासिन्धोरन्तर्वर्तमाने नीपोपवनवति मणिद्वीपे स्थितस्य चिन्तामणिगृहस्य तत्कोष्ठानां तत्रत्यदैवतानां च वर्णनं विधाय विन्दुरूपस्य पञ्चब्रह्माकारस्य मञ्चस्य, मञ्चोपरि वर्तमानस्य वितानस्य, परितो लम्बमानाया जवनिकायाः, आरोहणसाधनभूतस्य रत्नसोपानस्य, पर्यङ्के समास्तृतस्य दिव्यातिदिव्यस्य शयनीयस्य वर्णनं ललितपदैः पद्यैर्विहित महाकविना। तदनन्तरं च षड्भिरार्याभिर्मञ्चस्योपर्युपविष्टस्य भगवतः कामेश्वरस्य शिवस्य वर्णनं, ततश्च तदुत्सङ्गोपविष्टायाः भगवत्या ललितात्रिपुरसुन्दर्याः अनुपमं वर्णनं दशभिरार्याभिः कृतमस्ति। ततोऽष्टविंशतिभिरार्याभिर्ललितात्रिपुरसुन्दर्या नमस्कार-प्रशंसाप्रार्थनादिरूपा स्तुतिर्निबद्धास्ति।

तदनन्तरं दशभिः कवचत्मकः स्तवः प्रणीतोऽस्ति। अन्ते च षड्भिर्देव्युपासनायाः प्रकृतस्तोत्रपाठस्य च फलानि कथितानि कविना।

अन्यस्मिन् स्तोत्रद्वये लभ्यमाना दुर्वाससो माहात्म्यप्रदर्शनपरा आर्या इह स्तवे नैव लभ्यते। अनुमीयते यत् स्तोत्र-पाठकैः स्तोत्रलेखकैश्च स्वयं समूह्य सा निर्मिता स्यात्। परमस्माभिरत्राप्यसौ निवद्धा। इयं चासावार्या—

सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान्।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः॥ इति।

तेषां तेषां पौराणिकनैगमागमिकादीनां दैवतानां का काऽधिकारस्यावधिरिति स्तोत्रादस्मादवबोद्धुं शक्यते। सर्वोत्कृष्टो देवोऽत्र ब्रह्माण्डचक्रे भगवान् कामेश्वरः। स च परब्रह्मस्वरूपः परमेश्वर एव। सृष्ट्यादिपञ्चकृत्यानि कर्तुं या तस्य स्वाभाविक्युन्मुखता सैव तस्य कामः इति परिभाष्यते तावदागमशास्त्रेषु। तेन सृष्ट्यादिपञ्चकृत्याभिनयाभिलाषेणासौ कामेश्वरः। तस्य कामेश्वरत्वनिर्वहणसामर्थ्यरूपा देवी तदन्तर्वर्तमाना पराशक्तिः। सैव भगवती ललिता त्रिपुरसुन्दरी। तयोरेव काव्यात्मकं वर्णनं कृतमस्ति महाकविनात्र स्तोत्रे। सर्वं च तेषां शरीरावयवायुधादिकं प्रतीकोपासनालम्बनभूतं तत्तन्माहात्म्याभिव्यञ्जकमेव मन्तव्यम्। तथा तथा ध्यायमानौ दिव्यदम्पती स्वोपासकेभ्यस्तां तां सिद्धिं प्रदत्तः। शक्तिः शिवे तिष्ठति। तत एव ललितायाः स्थानं कामेश्वरोत्सङ्गदेशः। शक्तिरेव शिवस्य शिवता, शक्तिरहितस्य वस्तुनो जडतैवेति शक्तेरेव माहात्म्यं सुतरां गीयते शिवापेक्षया साधकैः। तत एव कामेश्वरादप्यूर्ध्वं वर्णिता कविना भगवती ललितात्रिपुरसुन्दरी। सैवोपासनकर्मणः आलम्बनानां पराकाष्ठा। सैव परा गतिः। इति न तदूर्ध्वं किञ्चिदपि दैवतमुपास्यम्।

गोरक्षबुद्धादीनामर्वाचीनानां गुरूणां नामोल्लेखो यो भगवता दुर्वाससा स्तोत्रयोः कृतोऽस्ति, स तस्य चिरजीवित्वेनोपपद्यते। सुचिरात्

सुचिरं जीवन्नसौ भगवान् काले काले स्तोत्रं स्तोत्रं निर्मितवान् लोकोपकारार्थम् । सिद्धमहारहस्य-शास्त्रस्य निर्मातॄणामाचार्यामृतवाग्भवानां पुरतः स्वैरं प्रकटीभूय स्वयमेव स्वस्य त्रिपुरामहिम्नस्तोत्र—निर्मातृत्वं कथितं खलु भगवता ।

यतो हि भगवान् दुर्वासा एव काश्मीरशैवदर्शनस्य प्रथमो गुरुरत्र लोके, तत कारणाद् रणवीरकेन्द्रीयविद्यापीठस्य शैवदर्शनकेन्द्रात् सर्वप्रथमं तत्कृतमेवैतत् स्तोत्ररत्नं प्रकाशनमर्हति । पुनः प्रकाशितमेतत् सहृदयानां हृदयान्याह्लादयेदित्याशास्ते —

डा० बलजिन्नाथपण्डितः,
शोधनिदेशकः,
शैवदर्शनकोशपरियोजनायाः
रणवीरकेन्द्रीयसंस्कृतविद्यापीठे
जम्मूपुरे ।

जम्मूपुरम्
ता १३-११-१९८०

# शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १८ | ६ | समहेन | समूहेन |
| २३ | १० | कीति | कीर्ति |
| २४ | १३ | नभः श्रीमुर्ष्य- | नभः श्रीमुर्ष्यै- |
| ३० | ७ | निविष्ठां | निविष्टां |
| ,, | १५ | मन्त्रवण | मन्त्रवर्णा |
| ३५ | ८ | वटुकवि | वटुकवि |
| ,, | ९ | सतत | सततं |
| ,, | १० | सङ्कृष | सङ्कर्षं |
| ३७ | १२ | वैडूय | वैडूर्यं |
| ३८ | ११ | याजन | योजन |
| ४० | ६ | प्रमी | प्रेमी |
| ,, | १५ | पात्र | पात्रं |

| पृष्ठम् | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ४२ | १६ | प्येव | प्येवं |
| ४४ | ५ | ईशान | ईशानं |
| ५१ | १२ | ऐणाङ्क | एणाङ्क |
| ५२ | १७ | वयस्यभूत | वयस्यभूतं |
| ५७ | ७ | यस्यास्ता | यस्यास्तां |
| ५७ | १८ | कपोलो | कपोलौ |
| ६० | १३ | पवमानने | पवमानेन |
| ६१ | ९ | मध्यै | मध्ये |
| ६३ | ४ | गरम् | गारम् |
| ,, | १६ | सतत | सततं |
| ६४ | ११ | गोरम् | गौरम् |
| ,, | १६ | तथामृतं | तथाभूतं |
| ६५ | ४ | मिदुम् | मिन्दुम् |
| ,, | [illegible] | पुष्पवत | पुष्पवत् |
| ६७ | [illegible] | युवता | युक्ताम् |
| ६८ | १२ | समहेन | समूहेन |
| ० | [illegible] | कूर्याद् | कुर्याद् |
| ७२ | १३ | सतत | सततं |
| ७५ | ५ | समहेन | समूहेन |
| ७७ | १० | महनोये | महनीये |
| ७८ | १९ | भ्रान्ति | भ्रान्तिं |
| ,, | ,, | द्रावयन्त | द्रावयन्तु |

| पृष्ठम् | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ७९ | ४ | अज्ञान | अज्ञानं |
| ,, | ११ | विशालं | विशाले |
| ,, | १६ | विपुल | विपुले |
| ८३ | ११ | नलय | निलय |
| ८४ | ४ | देवासहितां | देवीसहितां |
| ८८ | ६ | रवरूपे | स्वरूपे |
| ,, | ,, | स्थितः | स्थितम् |
| ,, | ,, | मञ्च | मञ्चं |
| ९२ | ५ | लापात | लापाङ्कत |
| ९३ | १५ | कोमक | कोमलक |
| ९४ | १५ | श्याङ्क | स्याङ्के |
| ९६ | १२ | तत्रः | तत्र |
| ९७ | १ | विलन्ति | विलसन्ति |
| ,, | ७ | क्रूर्पासवः | कूर्पासकः |
| ९८ | ४ | श्लक्ष्णी | श्लक्ष्णो |
| ,, | १२ | अनुग्रहं- | अनुग्रह- |
| ९९ | १६ | सततं | सततं |
| १०१ | ४ | युक्त | युक्तं |
| ,, | १४ | शरोरं | शरीरं |
| ,, | १५ | मर्शत्म | मशात्मि |
| ,, | ,, | त मे | तन्मे |
| ,, | १७ | प्रपदाजित | प्रपद्रजित |

| पृष्ठम् | पंक्ति | अशुद्धः पाठः | शुद्धः पाठः |
| --- | --- | --- | --- |
| १०३ | ३ | भाल | भालं |
| ,, | १६ | साक्षिण्थः | साक्षिण्यः |
| १०७ | १४ | पर:श | पराश |
| १०८ | १८ | घ्रात | घ्रातं |
| १०९ | ५ | भरित | भरितं |
| ११० | ६ | चिपि | चिदपि |
| ,, | ८ | भारेः | भारैः |
| १११ | १४ | यैर्मा | यैमा |
| ११३ | ५ | व्रर्णौ | वर्णौ |
| ,, | १५ | घ । दि | घादि |
| ११४ | १० | चत्मि | चात्मि |
| १२० | १० | दुभुयं | दुभयं |
| ,, | १९ | व | वै |

——:०:——

॥ श्रीः ॥

# ललिता-स्तव-रत्नम्

## भगवद्दुर्वाससा विरचितम्

वन्दे गजेन्द्रवदनं
वामाङ्कारूढवल्लभाश्लिष्टम् ।
कुङ्कुमपरागशोणं
कुवलयिनीजार-कोरकापीडम् ॥१॥

वल्लभा—पुष्टिरित्यभिधाना गणनाथप्रिया । तया आश्लिष्टम् । कुवलयिन्याः=कुमुदिन्याः जारश्चन्द्रः, तस्य कोरकम्=अविकसितं रूपम्, एककलात्मकम्, तदेवापीडः शेखरो यस्य तं वन्दे ॥ १ ॥

स जयति सुवर्णशैलः
सकलजगच्चक्रसंघटितमूर्त्तिः ।
काञ्चन-निकुञ्ज-वाटी-
कन्दल-दमरी-प्रपञ्च-संगीतः ॥२॥

सुवर्णशैलः=सुमेरुः; स चात्र श्रीचक्रात्मको वेद्यः । सकलेन जगच्चक्रेण तस्य शरीरं घटितम् । सकलजगत्प्रतीकात्मकं हि श्रीचक्रम् । काञ्चनमयानां निकुञ्जानां याः वाटयस्तासां यः कन्दलः=समूहः, तासु निवसन्त्यो या दमर्यः=भ्रमरजातिविशेषरूपाः भ्रमरकीटाः तू ३३३३३ इत्येवंविधध्वनिकारिणः; तासां दमरीणां प्रपञ्चेन समहेन सङ्गीतः=गीतयुक्ततामापादित इति । दमरी-प्रपञ्च-सङ्गीतं यत्रेति बहुव्रीहिर्वा सुवर्णशैलस्य विशेषणम् ॥ २ ॥

**हरिहय-नैर्ऋत-मारुत-**
**हरितामन्तेष्ववस्थितं तस्य ।**
**विनुमः सानुत्रितयं**
**विधिहरिगौरीशविष्टपाधारम् ॥३॥**

हरिहयः=इन्द्रः, तस्य हरिति=दिशि पूर्वस्याम्, नैर्ऋत्यां हरिति=दक्षिणपश्चिमायाम्, मारुत-हरिति=उत्तरपश्चिमायाम्; तासामन्तेषु=सीमासु । सानुत्रयं ब्रह्म-विष्णु-रुद्रलोकानामाधारभूतं विनुमः ॥ ३ ॥

**मध्ये पुनर्मनोहर-**
**रत्न-रुचिस्तवक-रञ्जित-दिगन्तम् ।**
**उपरि चतुश्शतयोजन-**
**मुत्तुङ्गं शृङ्गपुङ्गवमुपासे ॥४॥**

मध्ये=शिखरत्रयमध्ये । रत्नानां रुचिः=कान्तिः, तस्याः स्तवकाः=गुच्छाः तै रञ्जितानि दिगन्तानि येन तद्, उच्चतायां

चतुःशतयोजनपरिमाणम् उत्तुङ्गम्=अत्युच्चं शृङ्ग-पुङ्गवम्=श्रेष्ठं शिखरमहमुपासे ॥ ४ ॥

तत्र चतुश्शतयोजन-
परिणाहं देवशिल्पिना रचितम् ।
नानासालमनोज्ञं
नमाम्यहं नगरमादिविद्यायाः ॥५॥

देवशिल्पी=विश्वकर्मा । सालाः=प्राकाराः (प्राकारो वरणः सालः) । आदिविद्यायाः नगरं नानाप्रकारैः प्राकारैः सुशोभितमिति । एतच्च नगरं चतुश्शतयोजन-विस्तारमुपरि वर्णितस्य शृङ्गपुङ्गवस्य पृष्ठे विश्वकर्मणा निर्मितम् । विविधानां प्राकाराणां मध्ये मध्ये तत्र तत्र विविधानां देवानां देवीनां च स्थानानि यथाधिकारम् । तान्यग्रे क्रमेण वर्णयिष्यन्ते ॥ ५ ॥

प्रथमं सहस्रपूर्वक-
षट्शत-संख्याक-योजनं परितः ।
वलयीकृतस्वगात्रं
वरणं शरणं व्रजाम्ययोरूपम् ॥६॥

१६०० योजनायामं मण्डलाकारम् अयोरूपम्=अयोधातुनिर्मितं वरणं=प्राकारं शरणं व्रजामि ॥ ६ ॥

तस्योत्तरे समीरण-
योजनदूरे तरङ्गितच्छायः ।

घटयतु मुदं द्वितीयो

घण्टास्तन-सार-निर्मितः सालः ॥७॥

समीरणपदेन ४९ इति संख्याभिप्रेता, पवनानां तत्संख्यत्वात् । तरङ्गिता तरङ्गवत् परितः प्रसृता छाया=कान्तिर्यस्य सः; द्वितीयः सालः=प्राकारः; घण्टास्तननिर्मितः=घण्टामध्ये लम्बमानं वस्तु येन सम्मिश्रेण धातुना निर्मितं भवति तेनैव मिश्रधातुना निर्मितो वप्रोऽस्माकं हर्षं घटयतु; bronz इति नमकोऽसौ सङ्करधातुः ॥ ७ ॥

उभयोरन्तरसीम-

न्युद्दामभ्रमररञ्जितोदारम् ।

उपवनमुपास्महे वय-

मूरीकृतमन्दमारुतस्यन्दम् ॥८॥

उभयोः प्राकारयोरन्तरसीम्नि=मध्यभुवि उद्दामैः=मदोन्मत्तैर्भ्रमरै रञ्जितं शवलीकृतमुदारं=सुविशालम्, ऊरीकृतः=आत्मीकृतः स्वीकृतः मन्दमारुतस्य स्यन्दः=मन्दः परिस्पन्दो येन तदुपवनं वयमुपास्महे ॥ ८ ॥

आलिङ्ग्य भद्रकाली-

मासीनस्तत्र हरिशिलाश्यामाम् ।

मनसि महाकालो मे

विहरतु मधुपान-विभ्रमन्नेत्रः ॥९॥

तत्र=उपवने हरिशिलावत्=इन्द्रनीलमणिवत् श्यामवर्णां भद्रकालीं देवीमालिङ्ग्य आसीनः=उपविष्टो मधुपानेन घूर्णमाननयनो महाकालनामा शिवो मे मनसि विहरतु ॥ ९ ॥

**तार्तीयीको वरणस्**
**तस्योत्तरसीम्नि वातयोजनतः ।**
**ताम्रेण रचितमूर्तिस्**
**तनुतामाचन्द्रतारकं भद्रम् ॥१०॥**

तस्य उपवनस्य, उत्तरसीम्नि उत्तरदिक्सीमास्थले वातयोजनतः=४९ योजनदूरे, ताम्रधातुना रचितशरीरस्तार्तीयीकः=तृतीयो वरणः=प्राकारः आचन्द्रतारकं सर्वत्र भुवनत्रये भद्रं=कल्याणं तनुतां=विस्तारयतु ॥ १० ॥

**मध्ये तयोश्च मणिमय-**
**पल्लव-शाखा-प्रसूनपक्ष्मलिताम् ।**
**कल्पानोकह-वाटीं**
**कलये मकरन्द-पङ्किलावालाम् ॥११॥**

तयोः प्राकारयोर्मध्ये मणिमयैः पल्लवैः तथाविधाभिः शाखाभिः तथाविधैश्च प्रसूनैः=पुष्पैः पक्ष्मलितां=पक्ष्मयुक्तां कृताम्, सर्वत्र तैर्भरिताम् । यथा नेत्रस्य परितः पक्ष्माणि भवन्ति तथा तस्याः परितो मणिमयाः पल्लवादय इति ।। ईदृशीं कल्पवृक्षाणां वाटीं मकरन्देन=मधुना पङ्किलाः=पङ्कयुक्ताः कृताः आवालाः=

आलवाला: यस्या: यस्यां वा तथाभूतां तां कलये—अन्तः स्मरामि ।। ११ ।।

तत्र मधुमाधवश्री-
तरुणीभ्यां तरलदृक्चकोराभ्याम् ।
आलिङ्गितोऽवतान्मा-
मनिशं प्रथमर्तुरात्तपुष्पास्त्रः ।।१२।।

मधुः चैत्रः, माधवो=वैशाखः, तयोर्ये श्रियौ ताभ्यां चञ्चलनेत्रचकोराभ्यां तरुणीभ्याम् आलिङ्गितः प्रथमर्तुः=वसन्तर्तुः, आत्तं गृहीतं पुष्पमेवास्त्रं येन सः मामनिशमवतात्=रक्षतु ।।१२।।

नमत तदुत्तरभागे
नाकिपथोल्लङ्घिशृङ्गसंघातम् ।
सीसाकृतिं तुरीयं
सितकिरणालोकनिर्मलं सालम् ।।१३।।

नाकिनां देवानां पन्थानमाकाशमप्युल्लङ्घनशीलः शृङ्गसंघातो यस्य तं सीसाकृतिं सीसवर्णं, सीसनिर्मिता आकृतिर् आकारः शरीरं यस्य तं तुरीयं प्राकारं नमत ।। १३ ।।

सालद्वयान्तराले
सरलालि*कपोत-चाटुसुभगायाम् ।

*सरलानिलपीत इति क.

सन्तान-वाटिकायां
सक्तं चेतोऽस्तु सततमस्माकम् ॥१४॥

प्राकारद्वयस्य अन्तराले=मध्ये वर्तमानायां सन्तानानां=पारिजातवृक्षाणां वाटिकायामस्माकं चेतः सततं सक्तमस्तु । सरलद्रुमाणामालिषु=श्रेणिषु ये कपोतास्तेषां चाटुरवेण सुभगायां=मनोहरायां वाटिकायामिति ॥ १४ ॥

तत्र तपनातिरूक्षः
सम्राज्ञीचरण-सान्द्रित-स्वान्तः ।
शुक्रशुचिश्रीसहितो
ग्रीष्मर्तुर्दिशतु कीर्तिमाकल्पम् ॥१५॥

तपनेन=सूर्येण; तस्यातपेनेति भावः, अतिरूक्षः=अत्यन्तं शुष्कतां प्राप्तः, परं वहिः शुष्कोऽपि सम्राज्ञी=पराशक्तिः, तस्याः चरणाभ्यां समाश्रिताभ्यां सद्भ्याम् सान्द्रितं=स्निग्धतामापादितं स्वान्तं हृदयं यस्य स ग्रीष्मर्तुः शुक्रश्रिया=ज्येष्ठलक्ष्म्या शुचिश्रिया=आषाढलक्ष्म्या च सहितः अस्माकं कीर्तिम् आकल्पं दिशतु ॥१५॥

उत्तरसीमनि तस्यो-
न्नतशिखरोत्कम्पि-हाटकपताकः ।
प्रकटयतु पञ्चमो नः
प्राकारः कुशलमारकूटमयः ॥१६॥

तस्य=ग्रीष्मर्तुभवनस्य, उत्तरदिक्सीमनि पञ्चमः आरकूटमयः=पित्तलमयः प्राकारो नः कुशलं प्रकटयतु । स च उन्नतेषु शिखरेषु उत्कम्पिन्यो हाटकमय्यः=स्वर्णमय्यः पताकाः यस्य तथाभूतः ॥१६॥

**प्राकारयोश्च मध्ये**

**पल्लवितान्यभृतपञ्चमोन्मेषा ।**

**हरिचन्दनद्रुवाटी**

**हरतादामूलमस्मदनुतापम् ॥१७॥**

पूर्वोक्तप्राकारद्वयमध्ये वर्तमाना हरिचन्दनानां=पारिजातानां वाटी अस्मदनुतापम् आमूलं हरतात्=हरतु । सा च वाटी पल्लवितः=वृद्धि प्राप्तो अन्यभृतानां=कोकिलानां पञ्चमाख्यस्य स्वरस्य उन्मेषो यस्यां तथाविधा ॥१७॥

**तत्र *नभः श्रीमुख्य**

**स्तरुणीवर्गैः समन्वितः परितः ।**

**वज्राटहासमुखरो**

**वाञ्छापूर्तिं तनोतु वर्षर्तुः ॥१८॥**

तत्र=सन्तानवाटिकायां नभाः=श्रावणस्तस्य श्रीः=लक्ष्मीः, श्रावणमासदेवीरूपा शक्तिः, सा मुख्या यासु तासां तरुणीनां वर्गैर्भाद्रपदलक्ष्मी-तत्परिजनादिरूपैश्च सुन्दरीवर्गैः परितः समन्वितः

*नभश्री इत्यशुद्धः पाठः मुद्रितपुस्तके

वर्षर्तुः वाञ्छापूर्ति नः तनोतु । स च ऋतुः वज्राणां विद्युत्पातानां गर्जः रूपेणाट्टहासेन मुखरः भुयिष्ठं सशब्दो भवतीति ॥१८॥

मारुतयोजनदूरे
महनीयस्तस्य चोत्तरे भागे ।
भद्रं कृषीष्ट षष्ठः
प्राकारः पञ्चलोहधातुमयः ॥१९॥

मारुतयोजनदुरे=पञ्चमात् प्राकाराद् एकोनपञ्चाशद्योजनदूरे तस्य चोत्तरदिशि स्थितः षष्ठः प्राकारो भद्रं कृषीष्ट= कुर्यात् । स च महनीयः=पूजनीयः, पञ्चलोहमयश्च । पञ्चलोहं सौराष्ट्रकलोहम्, तच्च सुवर्णरजतताम्रसीसक-रङ्गमयं मिश्रधातुरूपम् ॥१९।

अनयोर्मध्ये सन्तत-
मङ्कूरद्दिव्यकुसुमगन्धायाम् ।
मन्दारवाटिकायां
मानसमङ्गीकरोतु मे विहृतिम् ॥२०॥

अनयोः पञ्चमषष्ठयोः प्राकारयोर्मध्ये सन्ततमेव अङ्कूरन्ति = अङ्कूरायमाणतामाप्नुवन्ति यानि दिव्यकुसुमानि =पारिजातपुष्पाणि तेषां गन्धो यस्यां तथाभूतायां तद्गन्धयुक्तायाम् अङ्कूरदिति दीर्घत्वं कवेः स्वातन्त्र्यात्; मन्दारवाटिकायां=पारिजातवाटिकायाम्;, मे मानसं विहृतिं विहरणक्रियामङ्गीकरोतु=तत्रैव सततं ध्यानेन विहरतु ॥२०॥

तस्यामिषोर्जलक्ष्मी*-

तरुणीभ्यां शरदृतुः सदा सहितः।

अभ्यर्चयन् स जीया-

दम्बामामोदमेदुरैः कुसुमैः ॥२१॥

तस्यां पारिजातद्रुमवाटिकायाम्, इषः=आश्विनः ऊर्जः= कार्त्तिकः। इषोर्जयोर्लक्ष्म्यौ—ऐश्वर्यात्मिके शक्ती ते एव तरुण्यौ ताभ्यां सहितः शरदृतुः आमोदमेदुरैः=सुगन्धेन सान्द्रस्निग्धैः कुसुमैः अम्बामभ्यर्चयन् जीयात् ॥२१॥

तस्यर्षिसंख्ययोजन-

दूरे देदीप्यमानशृङ्गौघः।

कलधौतकलितमूर्तिः

कल्याणं दिशतु सप्तमः सालः ॥२२॥

तस्य=शरदृतोः स्थानस्य, तस्मादित्यर्थः; ऋषिसंख्यानि= सप्तसंख्यानि योजनानि दूरे देदीप्यमान-शिखरसमूहः कलधौतं रजतमिति मेदिनी। रजतेन रचितमूर्तिः; सप्तमः प्राकारः कल्याणं दिशतु। अष्टमस्य स्वर्णमयत्वेन कथयिष्यमाणत्वादत्र कलधौतं रजतमेव न स्वर्णम्, स च प्राकारो देदीप्यमानशिखरसमूहः इति ॥२२॥

---

*इषोर्ज इति मु॰ पुस्तकेऽशुद्धः पाठः।

मध्ये तयोर्मरुत्पथ-
लङ्घित-विटपाग्रविरुतकलकण्ठा ।
श्रीपारिजातवाटी
श्रियमनिशं दिशतु शीतलोद्देशा ॥२३॥

तयोर्वप्रयोर्मध्ये मरुत्पथे आकाशे लङ्घिताः=लङ्घनं विधाय प्रसृताः ये वृक्षविटपास्तेषामग्रभागेषु विरुताः=कूजन्त्यः कलकण्ठाः कोकिला यत्र तथाभूता या पारिजातवाटी साऽस्माकं श्रियमनिशं दिशतु । सा च वाटी शीतलोद्देशा, वृक्षच्छायावृतत्वात् ॥२३॥

तस्यामतिप्रियाभ्यां
सह खेलन् सहसहस्यलक्ष्मीभ्याम् ।
सामन्तो झषकेतो-
र्हैमन्तो भवतु हेमवृद्ध्यै नः ॥२४॥

तस्यां वाटिकायां सहः=मार्गशीर्षः, सहस्यः=पौषः, तयोर्लक्ष्मीरूपे ये शक्ती ताभ्यां स्वप्रियाभ्यां सह खेलन् झषकेतोः—कामदेवस्य सामन्तो हेमन्ततुः नः हेमवृद्ध्यै धनसमृद्धये भवतु ॥२४॥

उत्तरतस्तस्य महान्-
उद्भटहुतभुक्शिखारुणमयूखः ।

तपनीयखण्डरचितस्-

तनुतादायुष्यमष्टमो वरणः ॥२५॥

हेमन्तभुवनादुत्तरतः उद्भटः अत्यन्तं प्रज्वलितो यो हुतभुक्=अग्निस्तस्य शिखा इव=ज्वाला इव अरुणवर्णाः मयूखाः=किरणाः यस्य सः, तपनीयखण्डैः=स्वर्णपिण्डैः रचितो महान् अष्टमो वरणः आयुष्यमस्माकं तनुतात्, तनोतु विस्तारयतु । २५॥

कादम्बविपिनवाटीम्

अनयोर्मध्यभुवि कल्पितावासाम् ।

कलयामि सूनकोरक

कन्दलितामोद-तुन्दिल-समीराम् ॥२६॥

कदम्बानामिदमिति कादम्बं यद् विपिनं तद्बहुलां वाटीम्, अनयोः प्राकारयोर्मध्यभुवि कल्पितः आवासः=स्थितेः स्थानं यया ताम्; सूनानां=पुष्पाणां कोरकैः=कुड्मलैः कन्दलितः=प्रवृद्धि नीतो य आमोदः=सुगन्धः तेन तुन्दिलः परिपूर्णजठरपिटको समीरा यस्यां तां कलयामि चित्ते ध्यायामि ॥२६॥

तस्यामति-शिशिराकृतिर्

आसीनस्तपतपस्यलक्ष्मीभ्याम् ।

शिवमनिशं कुरुतान्मे

शिशिरर्तुः सततशीतलदिगन्तः ॥२७॥

तस्यां नीपवाटिकायामतिशीतलाकृतिः शिशिरर्तुः तपो= माघः, अकारान्तत्वं कवेःस्वातन्त्र्याद्वा व्याकरणान्तराद्वा ऐन्द्रादेः; तपस्यः=फाल्गुनः; तयोर्लक्ष्मीभ्यां सह आसीनः, सततशीतल-दिगन्तः सन् मे शिवं=कल्याणमनिशं=सदैव कुर्यात् ॥२७॥

तस्यां कदम्बवाट्यां
तत्प्रसवामोद-मिलित-मधुगन्धम् ।
सप्तावरणमनोज्ञं
शरणं समुपैमि मन्त्रिणी-शरणम् ॥२८॥

कदम्बवाट्यां तत्र तत्प्रसवानां=कदम्बपुष्पाणां य आमोदः= सुगन्धः, तेन मिलितो=मिश्रीभूतो मधुगन्धो ऽस्मिन् तथाभूतं सप्तभिरावरणैः=प्राकारैर्मनोज्ञं मन्त्रिणीनामिकायाः देव्याः शरणं= गृहं भवनमहं शरणं समुपैमि ॥२८॥

तत्रालये विशाले
तपनीयारचित-तरल-सोपाने ।
माणिक्य-मण्डपान्त*-
र्महिते सिंहासने सुमणिखचिते ॥२९॥

तपनीयेन=स्वर्णेन आरचितानि तरलानि=देदीप्यमानानि सोपानानि यस्य तस्मिन् विशाले भवने, माणिक्येन=रक्तमणिना

*मंहति सुसिंहासने—क.

मण्डपस्यान्तर्विद्यमाने महिते=पूजिते, सुमणिभिः खचिते सिंहासने निविष्टाम् आद्यां सङ्गीतमातृकां वन्दे इति पञ्चत्रिंशत्तमेन पद्येन सम्बन्धः। इतः सप्तभिः कुलकं वेद्यम्। मध्यमेषु सङ्गीतमातृकायाः विशेषणजातम् ॥२९॥

बिन्दु-त्रिपञ्च-कोण-

द्विप-नृप-वसु-वेद-दल-कुरेखाढ्ये ।

चक्रे सदा निविष्टां

षष्ट्यष्टत्रिंशदक्षरेशानीम् ॥३०॥

पूजादौ ध्येयस्य देव्याः मण्डलस्येदं वर्णनम्. तत्र मण्डले 'मध्ये बिन्दुः ततस्त्रिकोणचक्रं, तत्परितः पञ्चकोणं, ततः क्रमेण द्विपदलम्=अष्टदलम्, नृपदलं=षोडशदलं मान्धात्रादीनां सिद्धानां चक्रवर्तिनां षोडशसंख्याकत्वात्। तदनन्तरं वसुदलम्=अष्टदलं, वेददलं=चतुर्दलं च पद्मम् बाह्यतस्तन्मण्डलं कुरेखया=भूरेखया आढ्यम् एवंविधे चक्रे मण्डले निविष्टां षष्टिसंख्याकानामष्ट-त्रिंशत्संख्याकानां चाक्षराणां दलेषु ध्येयानामक्षराणां बीज-मन्त्रवर्ण-नामीशानीं स्वामिनीं तां सङ्गीतमातृकामित्यग्रे सम्बन्धः ॥३०॥

तापिच्छमेचकाभां

तालीदलघटितकर्णताटङ्काम् ।

ताम्बूलपूरितमुखीं

ताम्राधरबिम्बदृष्टदरहासाम् ॥३१॥

तापिच्छवत् तमालवन्मेचका श्यामला आभा यस्यास्ताम् । तालीदलाभ्यां घटितं ताटङ्काख्यं कर्णभूषणं यस्यास्ताम् । ताम्बूलभरितमुखीम्; ताम्रेऽधरबिम्बे=ओष्ठबिम्बे दृष्टो दरोऽल्पीयान् हासो यस्यास्ताम् । अल्पार्थेऽपि दर इति मेदिनी ॥३१॥

कुङ्कुमपङ्किलदेहां

कुवलय-जीवातु-शावक-वतंसाम् ।

कोकनदशोणचरणां

कोकिल-निक्वाण-कोमलालापाम् ॥३२॥

कुङ्कुमानुलेपेन पङ्किलो देहो यस्यास्ताम्; कुवलयानि=कुमुदानि तेषां जीवातुः=प्राणप्रदो विकासकश्चन्द्रः तस्य शावकः चन्द्रकला, सैव वतंसो शिरोभूषणं यस्यास्ताम्; कोकनदवद् रक्तकमलवत् शोणौ=रक्तौ चरणौ यस्यास्ताम् कोकिलानां कूजितमिव कोमलः आलापः=कण्ठध्वनिर्यस्यास्ताम् ॥३२॥

वामाङ्ग-*गलित-चूलीं

वनमाल्यकदम्बमालिकाभरणाम् ।

मुक्ताललन्तिकाञ्चित-

मुग्धालिक-मिलित-चित्रकोदाराम् ॥३३॥

वामादङ्गाद् गलिता=स्खलिता चूली=वक्षोवस्त्रं यस्यास्ताम् । वनमाल्यानि कदम्बपुष्पमालाश्च आभरणानि यस्यास्ताम् ।

---

*वामांसललित—क.

ललन्तिका तावत् कण्ठे लम्बमानो भूषणविशेष इति प्रसिद्धा । परमिह ललाटे लम्बमाने टिक्का इति देशभाषासु प्रसिद्धे मण्डलाकारे भूषणे प्रयुक्तोऽयं शब्द इति प्रतिभाति । देशान्तरेषु भूषणानां नामान्तराणि प्रचलितानि बहूनि । तन्मुक्तामयी या ललन्तिका तयाञ्चितं मुग्धं सुमनोहरमलिकं यत्तत्र मिलितं=लग्नं चित्रकं तिलकं तेनोदारां-विशालशोभाम् ॥६३॥

**करविधृतकीरशावक-**

**कल-निनद-व्यक्त-निखिल-निगमार्थाम् ।**

**वामकुचसङ्गिवीणावादन-**

**सौख्यार्धमीलिताक्षियुगाम् ॥३४॥**

करे गृहीतो यः शुक-शावकस्तस्य कलेन निनदेन=कूजितेन व्यक्ताः स्पष्टमुच्चरिताः निखिलानां निगमानां वेदादिविद्यानामर्थाः यया ताम् । निगमपदमत्रोपलक्षणं सर्वेषामपौरुषेयाणां शास्त्राणाम् । वामस्तनाश्रिता या वीणा तस्याः वादनेन लभ्यं यत् सौख्यं तेन अर्धनिमीलितमक्षियुगलं यस्यास्ताम ॥३४॥

**आपाटलांशुकधराम्**

**आदिरसोन्मेषवासितकटाक्षाम् ।**

**आम्नायसारगुलिकाम्**

**आद्यां सङ्गीतमातृकां वन्दे ॥३५॥**

आपाटलवर्णवस्त्रधारिणीम्, आदिमस्य शृङ्गारनाम्नो रसस्योन्मेषेण वासिताः=अध्युष्टाः कटाक्षाः यस्यास्ताम् । शृङ्गारो-

द्वीपककटाक्षाम् । आम्नायसाराणां शास्त्ररहस्यानां गुलिकाम्; आद्यां पुरातनीं सङ्गीतमातृकां=सङ्गीतकलाप्रस्पन्दिनीं मान्त्रिणीं देवीं वन्दे ॥३५॥

तस्य च सुवर्णसाल-
स्योत्तरतस्तरुणकुङ्कुमच्छायः ।
शमयतु मम सन्तापं
सालो नवमः स पुष्परागमयः ॥३६॥

तरुणं सुविकासं प्राप्तं यत् कुङ्कुमं कश्मीरजं तस्यच्छाया=कान्तिः, तद्वच्छाया=कान्तिर्यस्यासौ नवमः सालः=प्राकारः नः सन्तापं शमयतु । स च पुष्परागमयः=पुखराज इतिख्यातैः रत्नै-र्निर्मितः । मन्त्रिणीभवनस्योत्तरतस्तस्य स्थितिः ॥३६॥

अनयोरन्तरवसुधाः
प्रणुमः प्रत्यग्रपुष्परागमयीः ।
सिंहासनेश्वरीमनु-
चिन्तन-निस्तन्द्र-सिद्धनीरन्ध्राः ॥३७॥

अनयोः प्राकारयोरन्तरवसुधाः=मध्ये वर्तमानाः स्थलीः वयं प्रणुमः । ताश्च प्रत्यग्रं सद्य एव खनेरासादितेन पुष्परागमणिना निर्मिताः । सिंहासनेश्वरी नाम देवी तस्याः मनुर्मन्त्रः तस्य चिन्तने निस्तन्द्राः सततं संलग्ना ये सिद्धाः तैर्नीरन्ध्राः=भरिताः स्थलीः प्रणुम इति सम्बन्धः ॥३७॥

तत्सालोत्तरदेशे

तरुणजपा-किरण-धोरणी-शोणः ।

प्रशमयतु पद्मराग-

प्राकारो मम पराभवं दशमः ॥३८॥

नवमस्य प्राकारस्योत्तरदिशि तरुणं यज्जपापुष्पं तस्य कान्तेः किरणानां या धोरणी=गतेः शैली, तस्याः कान्तेः प्रसारः; तद्वत् शोणः=रक्तवर्णः पद्मरागेण माणिक्येन निर्मितो दशमः प्राकारो मम आणवादिमलकृतं पराभवं प्रशमयतु ॥३८॥

अन्तरभूकृतवासान्

अनयोरपनीतचित्तवैमत्यान् ।

चक्रेशीपदभक्ताँ-

श्चारणवर्गानहर्निशं कलये ॥३६॥

अनयोः अन्तरभुवि=प्राकारयोर्मध्ये वर्तमानायां स्थल्यां कृतनिवासान् अपनीतं चित्तभवं वैमत्यं=विरुद्धनिश्चयजातं येभ्य-स्तान्, चक्रेशी नाम देवी तस्याः पदयोर्भक्तान्, चारणाः स्तुतिपाठकाः देवजातिविशेषस्य प्राणिनः, तान् अहर्निशं कलये-ध्यायामि ॥३९॥

सारङ्गवाहयोजनदूरे

ऽसंघटितकेतनस्तस्य ।

गोमेदकेन रचितो

गोपायतु मां समुन्नतः सालः ॥४०॥

सारंगवाहा मृगवाहना मरुद्देवताः तत्संख्यानि एकोनपञ्चाशद् योजनानि दूरे, असंघटितानि = मुक्तानि फरफरायमाणानि केतनानि = पताकाः यस्य सः, गोमदेकनाम्ना रत्नेन रचितः समुन्नतः एकादशो वप्रः मां गोपायतु ॥४०॥

वप्रद्वयान्तरोर्व्यां

वटुकैर्विविधैश्च योगिनीवृन्दैः ।

सततं समर्चितायाः

सङ्कर्षण्याः प्रणौमि चरणाब्जम् ॥४१॥

प्राकारद्वयेस्य मध्ये स्थितायामुर्व्यां स्थल्यां वटुकनामकैर्भैरववर्गीयैर्देवैः विविधैश्च योगिनीनामकदेवीनां वृन्दैः सततं पूजितायाः सङ्कर्षण्याः देव्याः चरणाब्जं प्रणौमि ॥४१॥

तापसयोजनदूरे

तस्य समुत्तुङ्ग गोपुरोपेतः ।

वाञ्छापूर्त्यै भवताद्

वज्रमणीनिकर-निर्मितो वप्रः ४२॥

तस्य=पूर्वोक्तस्य वप्रस्य तापसाः सप्त, तत्संख्याकयोजनदूरे समुत्तुङ्गेन गोपुरेण=पुरद्वारेण उपेतः वज्रमणिभिर्निर्मितो वप्रो वाञ्छापूर्त्यै भवतात्। वाञ्छाः पूरयत्विति । मणो इति दीर्घत्वं कवेः स्वातन्त्र्याद्वा व्याकरणान्तराद्वा ऐन्द्रचान्द्रादेः ॥४२॥

वरणद्वितयान्तरतो
वासजुषो विहितमधुरसास्वादाः ।
रम्भादिविबुधवेश्या
रचयन्तु महान्तमस्मदानन्दम् ॥४३॥

वरणद्वयस्य=प्राकारद्वयस्य अन्तरतो=मध्ये वासजुषो= निवसतिं सेवमानाः; विहितो मधुरसस्य मैरेयस्वादस्य आस्वादः= चमत्कारमयी चर्वणा याभिस्ताः रम्भादिनाम्न्यो विबुधवेश्याः= अप्सरसो महान्तम् अस्माकमानन्दं=जगदानन्दचर्वणात्मकं रचयन्तु रहस्य-चर्यामार्गेण सम्पादयन्तु ॥४३॥

तत्र सदा प्रवहन्ती
तटिनी वज्राभिधा चिरं जीयात् ।
चटुलोर्मिजालनृत्यत्-
कलहंसीकुलकलक्वणितपुष्टा ॥४४॥

तत्र प्राकारद्वय-मध्यभूमावेव सदा प्रवहन्ती वज्राभिधाना नदी चिरं जयतु । तस्याः चटुलेषु=चञ्चलेषु लहरीजालेषु नृत्यन्त्यो याः कलहंस्यस्तासां कुलस्य=समूहस्य कलेन=मधुरेण क्वाणितेन=कूजितेन पुष्टा=मांसला, प्रवृद्धनिनादा इति भावः ॥४४॥

रोधसि तस्या रुचिरे

वज्रेशी जयति वज्रभूषाढ्या ।

वज्रप्रदानतोषित-

वज्रिमुखत्रिदश-विनुतचारित्रा ॥४५॥

तस्या वज्राभिधायाः नद्या रुचिरे रोधसि=तटे वज्रैस्तदाख्यैर्मणिभिः कृता या भूषा=शृङ्गारस्तेन आढ्या वज्रेशी नाम देवी जयति। तया च वज्रेश्वर्या वज्रनाम्नोऽस्त्रस्य प्रदानेन तोषिता वज्रिमुखाः=इन्द्रप्रभृतयः त्रिदशाः=देवाः। ईदृशैस्तैर्देवैर्विनुतं संस्तुतं, नु स्तुताविति, चारित्रं यस्याः सा तथाविधा जयति ॥४५॥

तस्योदीच्यां हरिति

स्तवकित-सुषमावलीढ-वियदन्तः ।

वैडूर्यरत्नरचितो

वैमल्यं दिशतु चेतसो वरणः ॥४६॥

तस्य वज्रेश्वरीसदनस्य उदीच्यां दिशि स्तवकिता=गुच्छीभूता या महती सुषमा=सुन्दरता, तयाऽवलीढः=ग्रस्तो वियतः=आकाशस्य अन्तः=अपरा सीमा येन स तथाविधो वैडूर्यमणिविरचितो वरणो=वप्रः चेतसो वैमल्यं=निर्मलतां दिशतु=ददातु। त्रयोदशोऽयं प्राकारः ॥४६॥

अधिमध्यमेतयोः पुनर्

अम्बाचरणावलम्बितस्वान्तान्* ।

कार्कोटकादिनागान्

कलयामः किञ्च बलिमुखान् दनुजान् ॥४७॥

एतयोर्द्वादशत्रयोदशयोः प्राकारयोः अधिमध्यम्=मध्ये वर्तमाने स्थाने अम्बायाः परादेव्या जगन्मातुश्चरणयोरवलम्बितानि=समाश्रितानि स्वान्तानि चेतांसि येषां तान् कार्कोटादिनामकान् नागान्=कुलनागदेवताः किञ्च बलिमुखान् =बलिदानवप्रभृतीन् दनुजान्=दैत्यान् कलयामः=तत्र तथा स्थितान् कलयामो भावनया तथा स्थापयामः ।४७॥

गन्धवहसंख्य-योजनदूरे

गगनोर्ध्वजाङ्घिकस्तस्य ।

वासवमणिप्रणीतो

वरणो बहलयतु वैदुषीं विशदाम् ॥४८॥

गन्धवहो=वायुः, मरुत्, तत्संख्यानि एकोनपञ्चाशद् योजनानि दूरे गगनादप्यूर्ध्वम्, अन्तरिक्षादप्युपरि जाङ्घिकः=जङ्घाभ्यां जीवनशीलः, तत्र गमनशील इति वासवमणिना इन्द्रनीलेन प्रणीतो वरणः चतुर्दशो वप्रः विशदां=निर्मलां वैदुषीं=विद्वत्तां बहलयतु=वर्धयतु नः इति शेषः ॥४८॥

---

*स्वान्ताम् इति मु. पुस्तकेऽशुद्धः पाठः ।

मध्यक्षोण्यामनयो-
महेन्द्रनीलात्मकानि च सरांसि ।
शातोदरीसहायान्
भूपालानपि पुनः पुनः प्रणुमः ॥४९॥

अनयोर्वप्रयोर्मध्ये स्थितायां क्षोण्यां स्थल्यां महेन्द्रनीलमणिमयानि सरांसि तत्र विद्यमानानि प्रणुमः । किञ्च तत्र स्थितान् शातोदर्यः=तनुतरमध्याः क्षीणोदरा याः सुन्दर्यस्ताभिः सहितान् भूपालान्=मान्धातृप्रभृतीन् पुरातनान् षोडशमहाचक्रवर्तिनः पुनः पुनः प्रणुमः; अथवा भूपालाः आनन्देश्वराद्या राष्ट्राधिपा भैरवास्तान् योगिनीगणसहितान् प्रणुमः इति ॥४९॥

आशुगयोजनदूरे
तस्योर्ध्वं कान्तिधवलितदिगन्तः ।
मुक्ताविरचितगात्रो
मुहुरस्माकं मुदे भवतु सालः ॥५०॥

आशुगो=मरुत्, तत्संख्य (४९) योजनदूरे तस्योर्ध्वं मुक्तामणिना विरचितशरीरः, स्वकान्त्या च धवलिताः दिशामन्ता येन सः, सालः=वप्रः मुहुरस्माकं हर्षाय भवतु ॥५०॥

आवृत्त्योरधिमध्यं
पूर्वस्यां दिशि पुरन्दरः श्रीमान् ।

अभ्रमुविटाधिरूढो

विभ्रममस्माकमनिशमातनुतात् ॥५१॥

आवृत्त्योः प्राकारयोरधिमध्यं मध्यभागे पूर्वस्यां दिशि स्थितः पुरन्दरः=इन्द्रोऽस्माकं विभ्रमं भोगमोक्षात्मकं विलासमातनुतात्= विस्तारयतु अनिशम्=सततम् । स च श्रीमान् अभ्रमुनाम्नी या दिव्या दिग्घस्तिनी तस्या विटः=प्रेमी य ऐरावतो नाम दिग्घस्ती तमधिरूढः=आरूढो वर्तते ॥५१॥

तत्कोणे व्यजनस्त्रुक्-

तोमरपात्रस्त्रुवान्नशक्तिधरः ।

स्वाहास्वधासमेतः

सुखयतु मां हव्यवाहनः सुचिरम् ॥५२॥

तस्याः स्थलेः दक्षिणपूर्वकोणे स्वाहास्वधाभ्यां तन्नामकदेवीभ्यां समेतो भगवान् हव्यवाहनोऽग्निः सुचिरं मां सुखयतु । स च हस्तैः व्यजनं स्त्रुचं=घृतार्पणसाधनभूतं चमसं, तोमरं नाम शस्त्रम्, आहुतिद्रव्यपात्र, स्त्रुवं द्विबुध्नं हस्तमात्रप्रमाणं घृतार्पणचमसम्, अन्नम्=हव्यरूपं तिलतण्डुलादि, शक्तिनामकं चास्त्रं बिभ्राणोऽस्ति ॥५२॥

दक्षिणदिगन्तराले

दण्डधरो नीलनीरदच्छायः ।

त्रिपुरापदाब्जभक्तस्तिरयतु
मम निखिलमंहसां निकरम् ॥५३॥

तस्यामेव स्थल्यां दक्षिणदिशो मध्यभागे नीलनीरदकान्तिः त्रिपुरादेव्याः पदकमलयोर्भक्तो दण्डधरो=यमराजो मम अंहसां=पापानाम् निखिलं=सर्वं निकरं=समूहं तिरयतु=अदर्शनाख्यं लोपं नयतु ॥५३॥

तस्यैव पश्चिमायां
दिशि दलितेन्दीवरप्रभाश्यामः ।
खेटासियष्टिधारी
खेदानपनयतु यातुधानो मे ॥५४॥

तस्य=यमसदनस्य पश्चिमायां, स्थल्याश्च दक्षिणपश्चिमायां विदिशि दलितानि विकसितानि यानीन्दीवराणि=नीलकमलानि तेषां या प्रभा तद्वच्छ्यामलवर्णः खेटः=चर्म, असियष्टिः=खड्गं, तदुभयधारी खड्गचर्मधारी यातुधानः निर्ऋतिनामकं रक्षोजातीयं दैवतं मे खेदानपनयतु ॥५४॥

तस्या उत्तर*देशे
धवलाङ्गो विपुलझषवरारूढः ।

---

*तस्यामुत्तरदेशे इति क.

पाशायुधात्तपाणिः

पाशी विदलयतु पाशजालानि ॥५५॥

तस्याः नैऋतदिशः उत्तरदेशे पश्चिमायां दिशि धवलाङ्गः=शुभ्रवर्णशरीरः, झषवरारूढः=मकरवरमारूढः पाशनामकेनायुधेन् आत्तो गृहीतो पाणिर्यस्य सः पाशी=वरुणोऽस्माकं पाशजालानि विदलयतु ॥५५॥

वन्दे तदुत्तरहरित्-

कोणे वायुं चमूरुवरवाहम् ।

कोरकित-तत्त्वबोधान्

गोरक्षप्रमुखयोगिनोऽपि मुहुः ॥५६॥

तदुत्तरम्=तदग्रे वर्तमानायाः हरितः=दिशः कोणे=पश्चिमोत्तरे कोणे स्थितं चमूरुवरवाहं=मृगविशेषवाहनं वायुदेवं वन्दे। तत्रैव कोरकितः=विकसत्प्रायावस्थायां स्थितः तत्त्वबोधो येषां तान् गोरक्षप्रमुखान्=गोरक्षादीन् योगिनोऽपि मुहुर्वन्दे ।

एतेन ज्ञायते यद् भगवता दुर्वाससा स्तोत्रमेतद् गोरक्षनाथ-कालादनन्तरं निर्मितमिति । चिरजीविनस्ते यदाकदाचिदप्येवंविधे कर्मणि प्रवर्तितुं क्षमाः ॥५६॥

तरुणीरिडाप्रधाना-

स्तिस्रो वातस्य तस्य कृतवासाः ।

प्रत्यग्रकापिशायन-

पान-परिभ्रान्त-लोचनाः कलये ॥५७॥

तस्य वातस्य तिस्रः इडादिनामिकास्तरुणीः=तस्य शक्तीरिति। तत्र कृतवासाः; प्रत्यग्रम् अभिनवत्वेन कृतसन्धानं यत् कापिशायनं=मद्यं तस्य पानेन ताः परिभ्रान्तलोचनाः=घूर्णमाननयनास्तरुणीः कलये—ध्यानेन ताः भावयामि ॥५७॥

तल्लोकपूर्वभागे

धनदं ध्यायामि शेवधिकुलेशम् ।

अपि माणिभद्रमुख्या-

नम्बाचरणावलम्बिनो यक्षान् ॥५८॥

वायव्यकोणस्य पूर्वभागे=उत्तरस्यां दिशि; शेवधीनां=निधानानां कुलस्य=समूहस्य ईशम्=स्वामिनं धनदं कुबेरं ध्यायामि । अपि च अम्बाया जगन्मातुश्चरणयोरवलम्बिनस्तदाश्रितान माणिभद्रादीन् यक्षानपि तत्र ध्यायामि ॥५८॥

तस्यैव पूर्वसीमनि

तपनीयारचितगोपुरे नगरे ।

कात्यायनीसहायं

कलये शीतांशुखण्डचूडालम् ॥५९॥

तस्य कुवेरभवनस्य पूर्वसीमनि=पूर्वदिक्सीमायां उत्तरपूर्वस्यां विदिशि, तपनीयेन=स्वर्णेन आरचितानि=समलङ्कृतानि गोपुराणि=पुरद्वाराणि यत्र तथाविधे नगरे कात्यायनी-सहायं=देवीसहितं शीतांशोः चन्द्रस्य खण्डेन=शकलेन चन्द्रकलयेत्यर्थः, चूडालम्=कृतचूडं, कृतशिरोभूषणम् ईशान नाम दिक्पालं, कलये=ध्यानेन स्थापयामि ॥५९॥

तत्पुरषोडशवरण-

स्थलभाजस्तरुणचन्द्रचूडालान् ।

रुद्राध्याये पठितान्

रुद्राणीसहचरान् भजे रुद्रान् ॥६०॥

तत्पुरे=ईशानभवने, ईशानभवनात् परतो, यो षोडशो वरणः=प्राकारः तत्रत्यं यत् स्थलं तद् भजमानाः, तरुणैश्चन्द्रैः=चन्द्रकलाभिः, चूडालाः=कृतचूडालङ्कारा ये रुद्राध्याये=यजुर्वेदीये रुद्रस्तुतिपरेऽध्याये पठिताः स्तुता रुद्राः, तान् रुद्राणीसहचरान् रुद्रान् भजे=ध्यायामि ॥६०॥

पवमानसंख्ययोजन-

दूरे बालतृणमेचकस्तस्य ।

सालो मरकतरचितः

सम्पदमचलां श्रियं च पुष्णातु ॥६१॥

पवमानाः=मरुतः, तत्संख्ययोजनदूरे=४९ योजनदूरे, वालतृणवन्मेचको=हरितवर्णो यो मरकतमणिरचितो वप्रः सोऽस्माकं

परापरसिद्धिरूपं सम्पदं भोगमोक्षोभयप्रदानसमर्थां च श्रियं पुष्णातु ॥६१॥

आवृतियुग्मान्तरतो
हरितमणी-निवहमेचके देशे ।
हाटक-ताली-विपिनं
हालाघट*घटित-विटपमाकलये ॥६२॥

आवृतियुग्मं=प्राकारद्वयं षोडश-सप्तदशात्मकं, तयोरन्तराले=मध्ये हरितमणिर्मरकतरत्नं तन्निवहेन मेचके=हरितकान्तियुक्ते देशे हाटकतालीनां=स्वर्णमयतालवृक्षाणां विपिनं=वनं हालाघटैः=ताड़ीतिनाम्ना प्रसिद्धस्य मद्यस्य घटैः घटिताः युक्ताः विटपा यत्र तद् विपिनं कलये=भावनया पश्यामि तत्र ॥६२।

तत्रैव मन्त्रिणीगृह-
परिणाहं तरलकेतनं सदनम् ।
मरकत-सौध-मनोज्ञं
दद्यादायूंषि दण्डनाथायाः ॥६३॥

तत्रैव सौवर्णतालीवृक्षोपवने मन्त्रिणीगृहस्य परिणाहो-विस्तार इव परिणाहो यस्य तद् देव्या दण्डनाथायाः सदनं=भवनमायूंषि नो

*हालामद इति क.

दद्यात् । तच्च सदनं तरलकेतनम्=तरलानि फरफरायमाणानि केतनानि यस्मिन्, किञ्च मरकतरचितैः सौधैः=प्रासादैर्मनोज्ञं मनोहरम् ॥६३॥

सद्ने तत्र हरिन्मणि-
संघटिते मण्डपे शतस्तम्भे ।
कार्त्तस्वरमयपीठे
कनकमयाम्बुरुहकर्णिकामध्ये ॥६४॥

इतः ६८ पद्यपर्यन्तं पञ्चभिर्वार्तालीदेव्याः वर्णनम् । प्रकरणसामर्थ्यतो दण्डनाथादेवी स्वयं वार्तालीति नाम्न्यपि । तत्र दण्डनाथादेवीसदने हरिन्मणिसंघटिते=मरकतमणिनिर्मिते शतस्तम्भे मण्डपे कार्त्तस्वरमये=स्वर्णनिर्मिते पीठे=सिंहासने कनकमयस्य अम्बुरुहस्य=कमलस्य कर्णिकायाः मध्ये चक्रे सञ्चारिणीत्यग्रिमपद्यस्थैः पदैरन्वयः ॥६४।

बिन्दुत्रिकोणवर्तुल-
षडस्रवृत्तद्वयान्विते चक्रे ।
सञ्चारिणी दशोत्तर-
शतार्ण-मनुराज-कमल-कलहंसी ॥६५॥

मध्ये बिन्दुना परितश्च क्रमेण त्रिकोणेन, वर्तुलमण्डलेन, षडस्राणां षट्पत्राणां द्वयेन चान्विते चक्रे मण्डले सञ्चारिणी=स्वैरं विहारिणी, दशोत्तरं दशाधिकं ये शतार्णाः शतवर्णाः तन्मयाः ये

मनुराजाः=श्रेष्ठाः मन्त्रास्ते एव कमलानि तेषु विहरन्ती कलहंसी इति रूपकम् । विशेषणमेतत् वार्तालीदेव्याः । अग्रिमपद्येषु तस्या विशेषणान्तराणि ॥६५॥

कोलवदना* कुशेशय-
नयना कोकारिमण्डितशिखण्डा ।
सन्तप्त-काञ्चनाभा
संध्यारुण-चेल-संवृत-नितम्बा ॥६६॥

कोलो वराहः, तस्य वदनमिव वदनं यस्याः सा; कुशेशयं कमलं, तदिव नयने यस्याः सा, कोकश्चक्रवाकः, तस्यारिः=चन्द्रः, तेन मण्डितोऽलङ्कृतः शिखण्डः केशपाशो यस्याः सा, सन्तप्तस्य काञ्चनस्याभेवाभा यस्याः सा, सन्ध्यावदरुणेन चेलेन वस्त्रेण संवृतः= आच्छादितो नितम्बो यस्याः सा, वार्तालीदेवीत्यग्रेऽन्वयः ॥६६॥

हलमुसलशङ्खचक्रा-
ङ्कुशपाशाभयवरस्फुरितहस्ता ।
कूलङ्कषानुकम्पा
कुङ्कुमजम्बालितस्तनाभोगा ॥६७॥

हलेन, मुसलेन, शङ्खेन, चक्रेण, अङ्कुशेन, पाशेन, अभयमुद्रया, वरदमुद्रया च स्फुरिताः देदीप्यमाना हस्ता यस्याः सा ।

---

*कोमलवदना इति—क.

कूलङ्कषा=उभयतटघातिनी, अत्यन्तप्रवृद्धेनौघेन प्रवहन्ती अनुकम्पा=करुणा यस्याः सा, कुङ्कुमेन—काश्मीरजलेपेन जम्बालितः कर्दमितः स्तनयोराभोगो विस्तारो यस्याः सा, वार्ताली ॥६७॥

धूर्त्तानामतिदूरा-
वार्ताशेषावलग्नकमनीया ।
आर्त्तालीशुभदात्री
वार्ताली भवतु वाञ्छितार्थाय ॥६८॥

धूर्त्तजनैर्दुर्लभा, वार्ताशेषमतिसूक्ष्मं नाममात्रेण ज्ञेयं यदवलग्नं=कटिः तेन कमनीया=मनोहरा; आर्त्तानां भवपाशजालपीडितानां आलिः=समूहस्तस्य कृते शुभदात्री=भोगमोक्षोभयजीवनफलदायिनी, वार्ताली नाम देवी। नो वाञ्छितार्थाय भवतु=अस्मभ्यं वाञ्छितानि फलानि ददातु ॥६८॥

तस्याः परितो देवीः
स्वप्नेश्युन्मत्तभैरवी-मुख्याः ।
प्रणमत जम्भिन्याद्या
भैरववर्गांश्च हेतुकप्रमुखान् ॥६९॥

तस्याः, वार्त्ताल्याः परितः स्थिताः स्वप्नेशी, उन्मत्तभैरवी इत्याद्याः जम्भिन्याद्याश्च देवीः हेतुकप्रभृतींश्च भैरववर्गान् प्रणमत । योगिन्यो देव्यः सदैव निजनिजभैरवसहिता एव तिष्ठन्ति। सर्वे चैते योगिनीभैरववर्गाः वार्तालीं देवीं परितः स्थिताः साधकैर्नमस्कार्याः ॥६९॥

पूर्वोक्तसंख्ययोजन-
दूरे पूयांशुपाटलस्तस्य ।
विद्रावयतु मदार्तिं
विद्रुमसालो विशङ्कटद्वारः ॥७०॥

पूर्वोक्तसंख्यानि=एकोनचत्वारिंशद् योजनानि दूरे स्थितः पूयांशुवत्=रुधिरकिरणवत् पाटलः=रक्तो विद्रुममयो वप्रो मदार्तिं=मम पीडां विद्रावयतु । स च विशङ्कटद्वारः=सुविशाल-गोपुरः । पाटलपदं श्वेतरक्तवर्णवाचकमप्यत्र रक्तवर्णाभिप्रायेणैव प्रयुक्तं वेदितव्यं, पूयांशुवर्णत्वाद्, विद्रुमयत्वाच्च ॥७०॥

आवरणयोरहर्निशम्
अन्तरभूमौ प्रकाशशालिन्याम् ।
आसीनमम्बुजासनम्
अभिनवसिन्दूरगौरमहमीडे ॥७१॥

सप्तदशाष्टादशयोरावरणयोः=प्राकारयोरन्तरभूमौ=मध्य-भुवि प्रकाशेन शालिन्यां शोभमानायाम् आसीनमुपविष्टम् अम्बुजा-सनं कमलासनं ब्रह्माणमहमीडे=स्तौमि । तस्य चापरविशेषणत्वेन अभिनवसिन्दूरगौरमित्युक्तम् सद्यः शोधितसुपिष्टसिन्दूरवद् गौर-मरुणवर्णमम्बुजासनमिति ॥७१॥

**वरणस्य तस्य मारुत-**

**योजनतो विपुलगोपुरद्वारः ।**

**सालो नानारत्नैः**

**संघटिताङ्गः कृषीष्ट मदभीष्टम् ॥७२॥**

तस्य वरणस्य—विद्रुमवप्रस्य मारुतयोजनतो=४९ योजनानि दूरे स्थितो विपुलं गोपुराख्यं बृहद्द्वारं यस्य सः सालः प्राकारः नानाप्रकारै रत्नैः संघटितं=विनिर्मितम् अङ्गं शरीरं यस्य स मदभीष्टं भोगमोक्षरसास्वादप्रदानं कृषीष्ट=करोतु ॥७२॥

**अन्तरकक्ष्यामनयो-**

**रविरलशोभापिचण्डिलोद्देशाम् ।**

**माणिक्यमण्डपाख्यां**

**महतीमधिहृदयमनिशमाकलये ॥७३॥**

अनयोः प्राकारयोरन्तरकक्ष्यां मध्यभुवम्, अविरला=घना या शोभा ,कान्तिस्तया पिचण्डिलो=वृहत्कुक्षिः बहुतरशोभायुक्तः सुविशालश्च उद्देशो=देशो यस्यास्तां महतीं माणिक्यमण्डपनाम्नीं पूर्वोक्तां मध्यकक्ष्याम् अधिहृदयं=हृदयमध्ये अनिशं—सततम् आकलये ध्यायामि ॥७३॥

तत्र स्थितं प्रसन्नं

तरुणतमालप्रवालकिरणाभम् ।

कर्णावलम्बिकुण्डल-

कन्दलिताभीशुकवचितकपोलम् ॥७४॥

इतः परं मुकुन्दनाम्नोक्तस्य भगवतो नारायणस्य वर्णनं ७८ तमं पद्यं यावत्। तत् पञ्चभिः कुलकमितः। तत्र माणिक्यमण्डपस्थले स्थितं प्रसन्नं, तरुणा ये तमालपल्लवास्तेषां किरणानामाभेवाभा यस्य तम् श्यामलकान्तिम्, कर्णाभ्यामवलम्बिताभ्यां कुण्डलाभ्यां कन्दलिताः=कन्दलवत् प्रसृता ये अभीशवः=किरणास्तैः कवचितौ=आच्छादितौ कपोलौ यस्य तं मुकुन्दम् ॥७४॥

शोणाधरं शुचिस्मितम्-

ऐणाङ्कवदनमेधमानकृपम् ।

मुग्धैणमदविशेषक-

मुद्रितनिटिलेन्दुरेखिकारुचिरम् ॥७५॥

शोणावधरौ यस्य तं, शुचि स्मितं यस्य तम्, एणाङ्को=मृगाङ्कश्चन्द्रः, तद्वत्सुन्दरं वदनं मुखं यस्य तम्, एधमाना वर्धमाना कृपा यस्य तम्, मुग्धा ये एणाः=कस्तूरीमृगास्तेषां मदेन=कस्तूरिकया लिखितो विशेषकस्तिलकं, तद्रूपा मुद्रिता=लिखिता निटिलदेशे=ललाटे या इन्दुरेखिका=चन्द्रकला तया रुचिरं सुन्दरम्, चन्द्रकलाकारेण मृगमदतिलकेन सुन्दरम्; मुकुन्दमवलम्बे ॥७५॥

नालीकदलसहोदर-

नयनाञ्चलघटित*मनसिजाकूतम् ।

कमलाकठिनपयोधर-

कस्तूरी-घुसृणपङ्किलोरस्कम् ॥७६॥

नालीकदलस्य=पद्मदलस्य सहोदरे=सदृशे ये नयनाञ्चले=नेत्रच्छदौ ताभ्यां घटितं=सम्पादितम् मनसिजस्य कामदेवस्य आकूतम् अभिप्रायो येन, दर्शनमात्रेण सुन्दरीणां हृदयेषु कामविकारजनकं तस्य नेत्रच्छदयोः सौन्दर्यमिति तात्पर्यम् । कमलाया लक्ष्म्याः पयोधरयोः लग्नो यः कस्तूरीचन्दनादिद्रव्यलेपस्तेन पङ्किलतां यातमुरो वक्षो यस्य तदालिङ्गनेनेति । अग्रे मुकुन्दमवलम्बे इत्यनेनान्वयः ॥७६॥

चाम्पेयगन्धिकैश्यं

शम्पासब्रह्मचारिकौशेयम् ।

श्रीवत्सकौस्तुभधरं

श्रितजनरक्षाधुरीणचरणाब्जम् ॥७७॥

चाम्पेयवत् सुगन्धि कैश्यं केशसमूहो यस्य तम् । चाम्पेयं च चम्पकपुष्पम् । शम्पा=विद्युत्, तस्याः सब्रह्मचारि, वयस्यभूतं, तत् सदृशचाकचक्यकारिकान्तियुक्तं कौशेयवस्त्रं यस्य तम् । श्रीवत्साख्यलाञ्छनधरं, कौस्तुभमणिधारिणं च । श्रितजनाः शरणागतास्तेषां

*नटितं इति—क.

रक्षाकरणे धुरीणे-अग्रेसरे रक्षाभारवहे चरणकमले यस्य तं मुकुन्दमवलम्बे ॥७७॥

कम्बुसुदर्शनविलसत्-
करपद्मं कण्ठलोलवनमालम् ।
मुचुकुन्दमोक्षफलदं
मुकुन्दमानन्दकन्दमवलम्बे ॥७८॥

कम्बुना शङ्खेन सुदर्शनचक्रेण च विलसती=शोभमाने करपद्मे यस्य तम्, कण्ठे लोला वनमाला यस्य तम्, मुचुकुन्दाख्याय मान्धातृपुत्राय मोक्षफलदमानन्दकन्दं=मुकुन्दं=मुकुं मोक्षं ददातीति तं भगवन्तं नारायणमवलम्बे आश्रयामि ॥७८॥

तद्वरणोत्तरभागे
तारापति-बिम्बचुम्बिनिजशृङ्गः ।
विविधमणीगण-घटितो
वितरतु सालो विनिर्मलां धिषणाम् ॥७९॥

तस्यैकोनविंशस्य वरणस्य वप्रस्योत्तरदिग्भागे तारापतिबिम्बं=चन्द्रमण्डलं चुम्बन्तीति तत्स्पर्शनशीलानि निजानि शृङ्गाणि—शिखरा यस्य सः; विविधमणिगणैर्घटितो विंशतितमः सालो विनिर्मलां धिषणामस्मभ्यं वितरतु=ददातु । मणी इति दीर्घत्वं कवेः स्वातन्त्र्यात् कोषव्याकरणान्तराद्वा साधारणजनदुर्लभात् ॥७९॥

प्राकारद्वितयान्तर-

कक्ष्यां पृथुरत्ननिकर-सङ्कीर्णाम् ।

नमत सहस्रस्तम्भक-

मण्डपनाम्नातिविश्रुतां भुवने ॥८०॥

उपरि वर्णितस्य प्राकारद्वयस्यान्तरे वर्तमानां कक्ष्यां सुविशालानां रत्नानां निकरैः सङ्कीर्णाम् प्रणमत। भुवने च सा कक्ष्या सहस्रस्तम्भकमण्डपनाम्ना अतीव विश्रुतास्ति ॥८०॥

प्रणुमस्तत्र भवानी-

सहचरमीशानमिन्दुखण्डधरम् ।

शृङ्गारनायिकामनु-

शीलनभाजोऽपि भृङ्गिनन्दिमुखान् ॥८१॥

तत्र सहस्रस्तम्भकमण्डपे "स्थितं" भवानीसहितमीशानं=पार्वतीसहितं शिवम्, इन्दुखण्डधरं=चन्द्रकलाधरं प्रणुमः। किञ्च तत्र तिष्ठन्तीं शृङ्गारनायिकां नाम देवीं तस्या अनुशीलनपरांश्च भृङ्गिनन्दिमुखान् रुद्रगणानपि प्रणुमः ॥८१॥

तस्यैणवाहयोजन-

दूरे वन्दे मनोमयं वप्रम् ।

अङ्कूरन्मणिकिरणा-

मन्तरकक्ष्यां च निर्मलामनयोः ॥८२॥

तस्माद् ऐणवाहाः=मृगवाहनाः मरुतः, तत्संख्य ४९ योजन-दूरे स्थितं मत्तोमयं प्राकारं वन्दे; अनयोश्च मध्ये वर्तमानां निर्मलाम् अङ्कूरन्मणिकिरणां=बहिः प्रसरन्मणिकिरणाम् अन्तरकक्ष्यां=मध्य-स्थितकक्ष्यां वन्दे। अङ्कूरदिति दीर्घत्वं कवेः स्वातन्त्र्याद्वा व्याकरणान्तराद्वा सामान्यविद्वदविषयात् ॥८२॥

तत्रैवामृतवापीं

तरलतरङ्गावलीढतटयुग्माम् ।

मुक्तामय-कलहंसी-

मुद्रित-कनकारविन्दसन्दोहाम् ॥८३॥

कलये इति ८५ तमे पद्ये स्थितेन क्रियापदेनान्वयः। त्रिभिरप्यमृतवापीवर्णनमेव। तत्रैव कक्ष्यायाम्, अमृतवापीं कलये=मनसा भावयामि। तस्याः विशेषणानि=तरलैस्तरङ्गैरवलीढं=पुनः पुनः स्पृष्टं तटयुग्मं यस्यास्ताम्; मुक्तामयीभिः=अतिधवलाङ्गाभिः, मौक्तिकनिर्मिताभिरिति वा, कलहंसीभिर्मुद्रितश्चिह्नितो यः कनकारविन्दानां=सौवर्णकमलानां सन्दोहः=समूहः स यस्यां ताम् ॥८३॥

शक्रोपलमयभृङ्गी-

सङ्गीतोन्मेषघोषितदिगन्ताम् ।

काञ्चनमयाङ्गविलसत्-

कारण्डवषण्ड-ताण्डवमनोज्ञाम् ॥८४॥

शक्रोपलः=इन्द्रनीलमणिः, तन्मयीनां भृङ्गीणां सङ्गीतस्योन्मेषेण समुत्थानेन घोषितानि दिशामन्तानि यस्यास्ताम्; काञ्चनमयानि अङ्गानि=शरीराणि येषां ते विलसन्तश्च, कारण्डवनामकाः पक्षिणः, तेषां षण्डस्य—समूहस्य ताण्डवेन=उद्धतनृत्येन मनोज्ञाममृतवापीं कलये ॥८४॥

कुरुविन्दात्म-कह्लक-

कोरक-सुषमा-समूह-पाटलिताम् ।

कलये सुधास्वरूपां

कन्दलितामन्द*कैरवामोदाम् ॥८५॥

कुरुविन्दं रत्नविशेषस्तदात्मकं यद्धल्लकं=रक्तकल्हारं तस्य कोरकाणां=कुड्मलानां सुषमायाः समूहेन=प्रवाहेण पाटलिताम्; पाटलीकृताम्; कन्दलितः=प्ररूढः, अमन्दः=तीव्रः कैरवपुष्पाणामामोदो यस्यां तां सुधास्वरूपाम्—अमृतमयीं वापीं कलये ॥८५॥

तद्वापिकान्तराले तरले

मणिपोतसीम्नि विहरन्तीम् ।

*मोद इति पाठः—क.

सिन्दूर-पाटलाङ्गीं

सितकिरणाङ्कुरकल्पितवतंसाम् ॥८६॥

इतो ८८ तमं पद्यं यावत् त्रिभिः पूर्वं तारादेव्याः वर्णनम् । तस्याः अमृतवापिकायाः अन्तराले=मध्ये, तरले=लहरीव्रातचञ्चले, मणिनिर्मितस्य पोतस्य जलयानस्य सीम्नि=अग्निमे कोणे, विहरन्तीम्, सिन्दूरवत् पाटलशरीराम्, सितकिरणश्चन्द्रस्तस्य योऽङ्कुरः=चन्द्रकलाभिनवोद्गता, तया कल्पितोऽवतंसः—शिरोभूषणं यस्यास्ता, तारां वन्दे इत्यग्रेऽन्वयः। अङ्कूर इति दीर्घत्वं कवेः स्वातन्त्र्याद्वा व्याकरणान्तराद्वा ॥८६॥

पर्वेन्दुबिम्बवदनां

पल्लवशोणाधरस्फुरितहासाम् ।

कुटिलकबरीं कुरङ्गी-

शिशुनयनां कुण्डलस्फुरितगण्डाम् ॥८७॥

पर्वणि पूर्णिमायां य इन्दुश्चन्द्रस्तस्य बिम्बं मण्डलमिव वदनं यस्यास्ताम्; पल्लववत् शोणो योऽधरः ओष्ठस्तत्र स्फुरितः=गतिशीलो हासो यस्यास्तां, सस्मिताधराम्, कुटिला कबरी-केशवेशो यस्यास्ताम्; कुरङ्गी-मृगी तस्याःशिशोर्नयनानीव नयनानि यस्यास्ताम्, कुण्डलाभ्यां स्फुरितौ गतिशीलौ देदीप्यमानौ वा गण्डौ कपोलौ यस्यास्ताम्। अथवा—कुण्डलयोः स्फुरितेनोपलक्षितौ गण्डौ यस्यास्ताम् । कुण्डलयोः स्फुरितं यत्र तथाभूतौ गण्डौ यस्यास्तामिति ॥८७॥

निकटस्थपोननिलयाः

शक्तीः शयविधृतहेमशृङ्गजलैः ।

परिषिञ्चन्तीं परित-

स्तारां तारुण्यगर्वितां वन्दे ॥८८॥

निकटस्थेऽपरे पोते स्थिताः शक्तीः=देवीः शयेन=हस्तेन विधृतं यद् हेममयं शृङ्गम्=क्रीडायामम्बुशीकरप्रक्षेपणोपकरणम्, तेन प्रक्षिप्यमाणैर्जलैस्ताः देवीः परितः—सर्वतः परिषिञ्चन्तीं, तारुण्यश्रिया गर्वितां तारां वन्दे ॥८८॥

प्रागुक्तसंख्ययोजनदूरे

प्रणमामि बुद्धिमयसालम् ।

अनयोरन्तरकक्ष्याम्

अष्टापदपु*ष्टमेदिनीं रुचिराम् ॥८९॥

प्रागुक्ता संख्या येषां तानि ४९ योजनानि दूरे स्थितं बुद्धिमयं वप्रं प्रणमामि । अनयोर्मनोबुद्धिमयवप्रयोरन्तरे मध्ये स्थितां कक्ष्याम् अष्टापदाः शरभाः दिव्यास्तैः पुष्टा भरिता मेदिनी स्थली यस्यास्तां, रुचिराम् अन्तरकक्ष्यां चेति शेषः प्रणमामि ॥८९॥

कादम्बरीनिधानां

कलयाम्यानन्दवापिकां तस्याम् ।

---

*रूप इति क.

शोणाश्मनिवहनिर्मित-

सोपानश्रेणिशोभमानतटीम् ॥९०॥

कादम्बरी-कदम्बपुष्पनिर्मिता सुरा, तस्या निधानभूताम् आनन्दवापिकां तस्यां कक्ष्यायां कलयामि = भावयामि । तस्याः विशेषणम्—शोणाश्मनः माणिक्यरत्नस्य निवहैः संमूहैर्निर्मिता या सोपानानां श्रेणिः, तया शोभमाना तटी यस्या आनन्दवापिकायास्तां कलयामि ॥९०॥

माणिक्यतरणिनिलयां

मध्ये तस्या मदारुणकपोलाम् ।

अमृतेशीत्यभिधानाम्

अन्तः कलयामि वारुणीं देवीम् ॥९१॥

तस्या वाप्याः मध्ये, माणिक्यनिर्मिता या तरणिर्नौका सैव निलयो यस्यास्तां, तत्र स्थिताम्; मदेन अरुणौ कपोलौ यस्यास्ताम्; अमृतेशीति नाम्ना प्रसिद्धां वारुणीं वरुणसम्बन्धिनीम् अथवा वारुणी-रूपां मदिराधिष्ठात्रीं देवीमन्तः कलयामि । यतो वरुणस्यावरतरं स्थानम्; ततोऽत्र मदिरादेवी वारुणोपदेनाभिप्रेता प्रतिभाति न पुनर्वरुणदेवशक्तिः ॥९१॥

सौवर्णकेनिपातन*-

हस्ताः सौन्दर्यगर्विता देव्यः

**निपातक इति ख.

तत्पुरतः स्थितिभाजो

वितरन्त्वस्माकमायुषो वृद्धिम् ॥९२॥

तस्या वारुणीदेव्याः पुरतः स्थितिभाजः सौन्दर्येण गर्विताः देव्यः; सौवर्णानि सुवर्णनिर्मितानि केनिपातनानि—नौचालनकाष्ठानि हस्तेषु यासां ताः देव्योऽस्माकमायुषो वृद्धिं वितरन्तु वर्धयन्त्वस्माकमायूंषि ॥९२॥

तस्य पृषद्श्वयोजन-

दूरेऽहङ्कारसालमतितुङ्गम् ।

वन्दे तयोश्च मध्ये

कक्ष्यां वलमानमलयपवमानाम् ॥९३॥

तस्य बुद्धिमयसालस्य, तस्मादित्यभिप्रायः, पृषदश्वाः पवनाः, तत्संख्य ४९ योजनदूरे स्थितमतितुङ्गमहङ्कारमयं वप्रं वन्दे, तयोर्वप्रयोर्मध्ये स्थितां, वलमानेन=प्रवहता मलयपवमानने-मलयमारुतेन युक्तां; तथाविधः पवमानो यत्र तां कक्ष्यां चापि वन्दे ॥९३॥

विनुमो विमर्शवापीं*

सौषुम्नसुधास्वरूपिणीं तत्र ।

---

*"वाटीं" इति क. ।

**वेलातिलङ्घि*वीची-**

**कोलाहलभरितकूलवनवाटीम् ॥६४॥**

तत्र कक्ष्यायां वर्तमानां सौषुम्नसुधास्वरूपिणीं=सहस्रार-कमलात् प्रस्रवन्ती या सुधा तन्मयीं, वेलातिलङ्घनशीलाः यास्तस्याः वीचयो लहर्यस्तासां कोलाहलेन=कलकल-ध्वनिना, भरिता कूल-स्थितानां वनानां वाटी यत्र तथाभूतां तां विमर्शवापीं विनुमः। अत्र "वेलातिलङ्घ्य" इति पाठो मुद्रिते पुस्तके स च न सङ्गच्छते ॥९४॥

**तत्रैव सलिलमध्ये॥**

**तापिच्छदलप्रपञ्चसुषमाभाम् ।**

**श्यामलकञ्चुकलसितां**

**श्यामा-विट+बिम्बडम्बरहरास्याम् ॥६५॥**

इतः ९७ तमं यावत् त्रिभिः कुरुकुल्लादेवीवर्णनम् ॥ तत्र विमर्शवाप्यामेव विमर्शमयजलमध्ये, तापिच्छस्य तमालस्य दलानां यः प्रपञ्चः समूहस्तस्य या घनश्यामला सुषमा तद्वदाभा यस्यास्ताम्; श्यामलेन कञ्चुकेन लसितां सुशोभिताम्, श्यामा-रात्रिस्तस्या विटः प्रेमी चन्द्रः, तस्य यद् बिम्बं मण्डलं तस्य डम्बरं गर्वोक्तिप्रपञ्चं हरति स्वकीयेन सौन्दर्येण तं पराजितं करोतीति तथाविधमास्यं वदनं यस्यास्तां तथाविधां कुरुकुल्लां मनसि कुर्महे ॥९५॥

---

*लङ्घ्य इति मु.

|| साल मध्ये इति ख ।

+ विधुबिम्बडम्बरास्याम् इति क. ।

आभुग्नमसृणचिल्ली-

हसितायुग्मशरकार्मुकविलासाम् ।

मन्दस्मिताञ्चितमुखीं

मणिमयताटङ्कमण्डित-कपोलाम् ॥९६॥

आभुग्ने=सम्यग् वक्रे, मसृणे-कोमले च ये चिल्ल्यौ=भ्रुवौ ताभ्यां हसितः=पराजितो अयुग्मशरस्य=कामदेवस्य कार्मुकस्य=धनुषो विलासो यया ताम्, मन्दस्मितेनाञ्चितं मुखं यस्यास्ताम्, मणिमयाभ्यां ताटङ्काभ्यां कर्णभूषणाभ्यां मण्डितौ=अलङ्कृतौ कपोलौ यस्यास्तां, ताटङ्कद्वयशोभया कपोलावपि सुन्दरतरतामाप्तौ यस्यास्तां कुरुकुल्लामित्यग्रे सम्बन्धः ॥९६॥

कुरुविन्दतरणिनिलयां

कुलाचलस्पर्धिकुचनमन्मध्याम् ।

कुङ्कुमविलिप्तगात्रीं

कुरुकुल्लां मनसि कुर्महे सततम् ॥९७॥

कुरुविन्दनाम्ना रत्नेन निर्मिता तरणिः—नौका निलयः स्थितिस्थलं यस्यास्ताम्, कुलाचलैर्महेन्द्रादिपर्वतैः सह स्पर्धिनौ=स्पर्धायुक्तौ यौ कुचौ=स्तनौ ताभ्यां नमन्मध्यं यस्यास्ताम्, सुविशालेन स्तनभारेणावनमच्छरीरमध्याम्; कुङ्कुमलेपेन विलिप्तं शरीरं यस्याः, तां कुरुकुल्लां देवीं मनसि सततं कुर्महे तां सदैव ध्यायाम इति ॥९७॥

तत्सालोत्तरभागे*
भानुमयं|| वप्रमाश्रये दीप्रम् ।
मध्यं च विपुलमनयो-
र्मन्ये विश्रान्तमातपोद्गरम् ॥९८॥

अहङ्कारसालस्योत्तरभागे सूर्यमयं प्राकारमाश्रये, दीप्रमिति सदा देदीप्यमानम् । अनयोरन्तरे यद्विपुलं विशालमातपोद्गिरणशीलं मध्यं मध्यस्थलं; तद् विश्रान्तं=विश्रान्तिबहुलं मन्ये—तथा भावयामि ॥९८॥

तत्र कुरुविन्दपीठे
तामरसे कनककर्णिकाघटिते ।
आसी+नमरुणवाससम्-
अम्लानप्रसवमालिकाभरणम् ॥९९॥

द्वाभ्यां मार्तण्डभैरवस्य वर्णनम् । कुरुविन्दं रत्नविशेषः, तन्मये पीठे सिंहासने स्थिते, कनकमय्या कर्णिकया घटिते-युक्ते तामरसे—रक्तकमले आसीनमुपविष्टम्, अरुणवाससं, शोणवस्त्रम्, अम्लाना सततं म्लानतारहिता या प्रसवमालिका-पुष्पमाला, साऽऽभरणं यस्य तं मार्तण्डभैरवं हृदये मन्ये ।।९९॥

---

*देशे—इति क.

|| चित्तमयम् इति ख.

+आपीन इति क.

चक्षुष्मतीप्रकाशन-
शक्तिच्छाया-समारचितकेलिम् ।
माणिक्यमुकुटरम्यं
मन्ये मार्तण्डभैरवं हृदये ॥१००॥

चक्षुश्मत्या प्रकाशनशक्त्या छायया च सह समारचिता केलिः-क्रीडा येन तम्; अत्र चक्षुष्मत्यादिविषये सौरशास्त्राणि द्रष्टव्यानि, यतः सांशयिकमेवैतद् व्याख्यानं प्रकरणवशादनुमितमात्रम् । माणिक्य-निर्मितेन मुकुटेन रम्यं मार्तण्डभैरवं, सूर्यमण्डलाधिष्ठायिनं भैरव-वर्गीयं देवं हृदये मन्ये-ध्यायामि ॥१००॥

इन्दुमयसालमीडे
तस्योत्तरतस्तुषारगिरिगौरम् ।
अत्यन्त-शिशिरमारुतम्-
अनयोर्मध्यं च चन्द्रिकोद्गारम् ॥१०१॥

इन्दुमयं चन्द्रमयं प्राकारं तस्य सूर्यमयस्योत्तरतः स्थितं तुषारगिरिवत् हिमालयवद् गौरं शुभ्रवर्णम्; ईडे=स्तौमि; अनयोश्च प्राकायोर्मध्यं यच्चन्द्रिकोद्गारं=कौमुदीमुद्गिरतीति तथाभूतम् अत्यन्तं शिशिरः शीतलो मारुतो यत्र तथाभूतं तदपीडे ॥१०१॥

तत्र प्रकाशमानं
तारानिकरैः परिष्कृतोद्देशम्* ।
अमृतमयकान्तिकन्दल-
मन्तः कलयामि कुन्दसितमिन्दुम् ॥१०२॥

तत्र मध्यस्थले प्रकाशमानं तारासमूहैः परिष्कृतः शोभमानतामापादितः उद्देशः=स्थलं यस्य तम्; अमृतमयः कान्तिकन्दलः किरणसमूहो यस्य तं, कुन्दपुष्पवत् सितं शुभ्रवर्णमिन्दुं चन्द्रमसम् अन्तः—हृदयभुवि कलयामि—भावयामि ॥१०२॥

शृङ्गारसालमीडे
शृङ्गोल्लसितं तदुत्तरे भागे** ।
मध्यस्थले तयोरपि
महितां शृङ्गारपूर्विकां परिखाम् ॥१०३॥

तस्य चन्द्रमयस्य वप्रस्योत्तरे भागे शृङ्गैः—निजशिखरैः, उल्लसितम्=ऊर्ध्वदिशि शोभमानं, शृङ्गाररसमयं सालमीडे=स्तौमि । तयोश्चन्द्रमयशृङ्गारमययोः सालयोर्मध्यस्थले स्थितां महितां=महद्भिः पूजितां शृङ्गारपूर्विकां परिखां शृङ्गार इति पदं पूर्वं यस्यास्तां समस्तपदवाच्यां शृङ्गाररसभरितां शृङ्गारपरिखामपि स्तौमि ॥१०३॥

---

*परिष्कृतं सेव्यम् इति क.

**देशे इति क.

तत्र मणिनौस्थिताभि*-

**स्तपनीयाविरचिताग्रहस्ताभिः+ ।

पाठान्तरमत्र-

तपनीयारचितसारिहस्ताभिः ।

शृङ्गारदेवताभिः

सहितं परिखाधिपं भजे मदनम् ॥१०४॥

तत्र परिखायां मणिनिर्मितनौकासु (नौकायां वा) स्थिताभिः; तपनीयैः=स्वर्णालङ्कारैः कटकाङ्गुलीयकादिभिराविरचिताः=समलङ्कृताः अग्रहस्ता यासां ताभिः; अथवा पाठान्तरे समीचीनतरे तपनीयेन-स्वर्णेनारचिताः याः नौसारणसाधनभूताः सारयः=नौचालनकाष्ठानि; ताः हस्तेषु यासां ताभिः शृङ्गाररसदेवताभिः सहितं शृङ्गारपरिखाया अधिपतिं मदनं-कामदेवं भजे ॥१०४॥

शृङ्गारवरणवर्यस्योत्तरतः

सकलविबुधसंसेव्यम् ।

चिन्तामणिगणरचितं

चिन्तां दूरीकरोतु मे सदनम् ॥१०५॥

---

*संस्थिताभिः इति क.

**तपनीयारचितसारिहस्ताभिः—इति क.

+ताग्निहस्ताभिः इति मुद्रिते पुस्तकेऽशुद्धः पाठः ।

शृङ्गारप्राकारस्योत्तरतः सकलैर्विबुधैः—देवगणैः, संसेव्यम्, चिन्तारत्नगणै रचितं सदनं भवनं मे चिन्तां दूरीकरोतु ॥१०५॥

मणिसदनसालयोरधि-

मध्यं दशतालभूमिरुहदीर्घैः ।

पर्णैः सुवर्णवर्णै-

र्युक्तां काण्डैश्च योजनोत्तुङ्गैः ॥१०६॥

इतः सार्धत्रयेणार्याणां पद्माटव्याः वर्णनम् । चिन्तामणिभवनस्य शृङ्गारवप्रस्य चाधिमध्यं=मध्यभुवि विद्यमानां पद्माटवीं भजामः इत्यग्रेण सम्बन्धः। तस्यास्तावद्विशेषणानि द्वितीयाविभक्त्यन्तानि। तथाहि दशतालभूमिरुहदीर्घैः=तालवृक्षदशकस्य या दीर्घता तां तादृशीं दीर्घतां दधानैः सुवर्णवर्णैः पर्णैः=पलाशैर्युक्ताम्, योजनोत्तुङ्गैश्च काण्डैः=कमलनालैर्युक्तां पद्माटवीं भजामः ॥१०६॥

मृदुलैस्तालीपञ्चक-

मानैर्मिलितां च केसरकदम्बैः ।

सन्ततगलितमरन्द-

स्रोतोनिर्यन्मिलिन्दसन्दोहाम् ॥१०७॥

मृदुलैः=कोमलैस्तालीपञ्चक तुल्यं मानं येषां तैः केसरकदम्बैः =किञ्जल्कसमूहैर्मिलितां=युक्ता,म् सन्ततमेव गलितं वहिः परिस्रुतं यन्मरन्दं मकरन्दं तस्य यानि स्रोतांसि=प्रवाहास्तेभ्यो निर्यन्तो=

निर्गच्छन्तो मिलिन्दानां मधुकराणां सन्दोहाः समूहाः यस्यास्तां पद्माटवीं भजामः । १०७॥

पाटीरपवनबालक-

धाटीनिर्यत्परागपिञ्जरिताम् ।

कलहंसीकुलकलकल-

कूलङ्कषनिनदनिचयकमनीयाम् ॥१०८॥

पाटीर-पवनः=चन्दनवनमरुत् तस्य बालकः=मन्दमन्दं वहनशीलः पवनः तस्य मन्दतरगत्या तदुपरि बालकत्वारोपः; तस्य मन्दमारुतस्य धाटी=चलनशैली, प्रवाहरूपिणी मन्दगतिस्तया गत्या निर्यन् यः परागः=कमलपुष्परेणुः तेन पिञ्जरितां-शबलीकृतां, कलहंसीनां कुलस्य यः कलकलः=कूजनात्मकः मृदुः कोलाहलः, तस्य यः कूलङ्कषः=तटप्रहारी निनदः=ध्वनिः, तस्य निचयेन समहेन कमनीयां सुमनोहरां पद्माटवीं भजामः ॥१०८॥

पद्माटवीं भजामः

परिमलकल्लोलपद्मलोपान्ताम्* ॥१०८॥

इदमार्यार्धमपि १०८ तमया सह गणनीयं प्रकरणवशतः । ततोऽत्रैव १०८ तमायाः समाप्तिर्न्याय्या न पुनर्यथा मुद्रिते पुस्तकेऽङ्कितम् । एवं करणं कवेः स्वातन्त्र्याद् वेद्यम्, यथा देवीसप्तशत्यां बहुविधं स्वातन्त्र्यं श्लोकपादानां गणने तथात्रापि मनागिदं स्वात-

*इदमार्यार्धं १०९ भागतया प्रदर्शितं मुद्रिते पुस्तके ।

न्त्यम् । परिमलस्य सुगन्धस्य कल्लोलैर्लहरीभिः पक्ष्मलानि, पक्ष्मयुक्तानीव तत्प्रसारबहुलानि उपान्तानि पार्श्वस्थलानि यस्यास्तां पद्मानां स्थलकमलानामटवीं वनं भजामः ॥१०८॥

देव्यर्घ्य*पात्रधारी

तस्याः पूर्वदिशि दशकलायुक्त£: ।

वलयितमूर्तिर्भगवान्

वह्निः क्रोशोन्नतश्चिरं पायात् ॥१०९॥

देव्याः अर्घ्यपात्रं धारयतीति तथाभूतः, वलयितमूर्तिः-वलयीकृतशरीरः, दशभिः स्वकलाभिर्युक्तः क्रोशमात्रमुन्नतो भगवान् वह्निः, तस्याः पद्माटव्याः पूर्वदिशि स्थितः चिरं पायात् रक्षतु ॥१०९॥

तत्राधारे देव्याः

पात्रीरूपः प्रभाकरः श्रीमान् ।

द्वादशकलासमेतो

ध्वान्तं मम बहलमान्तरं भिन्द्यात् ॥११०॥

तत्र आधारे—पद्माटवीरूपे स्थाने अथवा चिन्तामणिरचिते भवने, देव्याः=परभैरव्याः, पात्रीरुपः=पूजासाधनभूतार्घ्यपात्र-

*देव्यर्घ इति मुद्रिते पुस्तकेऽशुद्धः पाठः ।

£इदमर्धं कोष्ठकबद्धं प्रदर्शितं मुद्रितपुस्तके ।

तामुपयातः द्वादशभिर्निजकलाभिः समेतः—युक्तः, श्रीमान् प्रभाकरः मम आन्तरं—हृदयस्थं बहलं—घनं ध्वान्तम्—अन्धकारम् भिन्द्यात्—चूर्णीकरोतु ॥११०॥

**तस्मिन् दिनेशपात्रे**
**तरङ्गितामोदममृतमयमर्घ्यम् ।**
**चन्द्रकलात्मकममृतं,**
**सान्द्रीकुर्यादमन्दमानन्दम् ॥१११॥**

तस्मिन् सूर्यात्मकेऽर्घ्यपात्रे तरङ्गितः—तरङ्गवत्प्रसृतः आमोदो सुगन्धो यस्य तदमृतमयमर्घ्यं नः अमन्दमानन्दं सान्द्रीकुर्याद् घनतामापादयेत् स्निग्धतां च । तच्चार्घ्यं चन्द्रकलात्मकममृतम् ॥१११॥

**अमृते तस्मिन्नभितो**
**विहरन्त्यो विविधमणितरणिभाजः ।**
**षोडश कलाः सुधांशोः**
**शोकादुत्तारयन्तु मामनिशम् ॥११२॥**

तस्मिन्नमृते अभितो विविधमणिमयनौकास्वारूढाः सत्यः स्वैरविहारं च तत्स्थाः कुर्वन्त्यः, सुधांशोः चन्द्रमसः षोडश कलाः—षोडशकलाधिष्ठात्र्यो देव्यो मां शोकादुत्तारयन्तु अनिशं—सदैव । अपुरुषविधरूपतया ता एव दिनेशपात्रस्थितममृतम्, पुरुष-विधतया पुनस्ता एव नौकाः भजमानाः देव्यस्तत्र विहरन्त्यः स्वैरम् ॥११२॥

तत्रैव विहृतिभाजो

धातृमुखानां च कारणेशानाम्* ।

सृष्ट्यादिरूपिकास्ताः

शमयन्त्वखिलाः कलाश्च सन्तापम् ॥११३॥

तत्रार्घ्यपात्रभूतसूर्यमण्डलान्तरे विहृतिं=स्वैरविहारं भजमानाः, धातृमुखानां ब्रह्मादीनां कारणेशानां=पञ्चकारणानां ताः प्रसिद्धाः सृष्ट्यादिरूपिकाः=सृष्टि-स्थिति-संहृति-पिधानानुग्रहरूपाः अखिलाः कलाः=कलनसामर्थ्यरूपाः; कलनं च गतिक्षेपज्ञानगणनभोगीकरणादिरूपमैश्वर्यम्, तद्रूपाः कलाः नः सन्तापं शमयन्तु ॥११३॥

कीनाशवरुणकिन्नर-

राजदिगन्तेषु रत्नगेहस्य ।

कलयामि तान्यजस्रं

कलयन्त्वायुष्यमर्घ्यपात्राणि ॥११४॥

कीनाशो यमो दक्षिणस्यां, वरुणः पश्चिमायां, किन्नरराजो यक्षपतिः कुबेरः उत्तरस्यां दिशि पालकत्वेन स्थिताः । अथवा किन्नरपदेन कुबेरः, राजपदेन देवेन्द्रोऽभिप्रेतः, ततश्चतुर्णां त्रयाणां वा दिक्पतीनां दिगन्तेषु तस्य रत्नगेहस्य एतेषु भागेषु स्थितानि तानि-

*चकारपोशानाम् इति ख.

प्रसिद्धानि, अर्घ्यपात्राणि अजस्रं नः, आयूंषि कलयन्तु—दीर्घायुषोऽस्मान् सम्पादयन्तु ॥११४॥

पात्रस्थलस्य पुरतः
पद्मारमणविधिपार्वतीशानाम् ।
भवनानि शर्मणे नो
भवन्तु* भासा प्रदीपितजगन्ति ॥११५॥

पात्रस्थलस्य=अर्घ्यपात्रस्थानस्य पुरतः पद्मारमणो विष्णुः, विधिर्ब्रह्मा, पार्वतीशः शिवः, तेषां भवनानि गृहाणि नः शर्मणे-कल्याणाय भवन्तु । तानि च भासा=स्वदीप्त्या प्रदीपितानि प्रकाशितानि जगन्ति लोकलोकान्तराणि यैस्तथाभूतान्यतीव देदीप्यमानानि ॥११५॥

सदनस्यानलकोणे
सततं प्रणमामि कुण्डमाग्नेयम् ।
तत्र स्थितं च वह्निं
तरलशिखाजटिलमम्बिकाजनकम् ॥११६॥

सदनस्य=चिन्तामणिरचितस्य गेहस्यानलकोणे=दक्षिणपूर्वस्यामुपदिशि स्थितम् आग्नेयं कुण्डं सततं प्रणमामि । तरलाः याः शिखाः ज्वालास्ताभिर्जटिलं जटायुक्तमिव वह्निम्=अग्निं चापि प्रण-

*भवन्तीति क.

मामि । अग्नेरपरं विशेषणम्=अम्बिकाजनकमिति । कथमितरम्बिकाजनक इत्येवंविधं पौराणिकमाख्यानं नोपलब्धं मया । परं भवेत् किमप्यस्मादृशजनापरिज्ञातमाख्यानम् । पाठभेदो वा भवेदत्र कोऽपि, अथवा—अम्बिका पारमेश्वरी शक्तिर्जनिका उत्पादयित्री यस्य तमम्बिकाजनकमिति क्लिष्टा व्याख्यात्र ॥११६॥

**तस्यासुरदिशि तादृश-**
**रत्नपरिस्फुरितपर्वनवकाढ्यम् ।**
**चक्रात्मकं शताङ्गं**
**शतयोजनमुन्नतं भजे दिव्यम् ॥११७॥**

तस्य चिन्तामणिगेहस्य, असुरदिशि=नैरृते कोणे; तादृशैः रत्नैः=चिन्तामणिभिः परिस्फुरितं=देदीप्यमानं यत् पर्वनवकं=नवरथाङ्गसन्धिस्थलानि, तैराढ्यं=समृद्धम्, चक्रात्मकं=चक्राकारं मण्डलाकारं, शतयोजनानि आयामो यस्य तत् शतयोजनम्, उन्नतं दिव्यं शताङ्गम्=आयोधनरथं भजे—पूजयामि । अयं ललितादेव्या आदिदम्पत्योर्वोभयोरायोधनरथः ॥११७॥

**तत्राग्नि (तत्रैव) दिशि निषण्णां**
**तपनीयध्वजपरम्पराश्लिष्टम् ॥**
**रथमपरं च भवान्या**
**रचयामो मनसि रत्नमयचूडम् ॥११८॥**

तत्रैव दिशि स्थितं; अथवा तत्राग्निदिशि=दक्षिणपूर्वकोणे

स्थितमिति; तपनीयेन स्वर्णेन निर्मिता ये ध्वजास्तेषां परम्परया श्रेण्या आश्लिष्टम्, भवान्याः देव्याः अपरं रथं मनसि रचयामो ध्यायामः । तच्च रत्नमयचूडम्=तस्य शिरोभागो रत्नमय इति। इह पद्ये प्रकरण-सामर्थ्यतस्तत्राग्निदिशि इति पाठः शोभनः प्रतिभाति ॥११८॥

भवनस्य वायुभागे

परिष्कृतो विविधवैजयन्तीभिः ।

रचययु मुदं रथेन्द्रः

सचिवेशान्याः समस्तवन्द्यायाः ॥११९॥

भवनस्य वायुभागे उत्तरपश्चिमायां विदिशि, विविधाभिर्वैजयन्तीभिः=पताकाभिः परिष्कृतः=सुसज्जितः सुशोभितश्च समस्तदेवासुरमानवादिवन्द्यायाः सचिवेशानीनाम्न्याः देव्याः रथेन्द्रः अपरः आयोधनरथः नो मुदं हर्षं रचयतु ॥११९।

कुर्मोऽधिहृदयमनिशं

क्रोडास्यायाः शताङ्गमूर्धन्यम्॥ ।

रुद्रदिशि रत्नधाम्नो

+रुचिरशलाकाप्रञ्चकञ्चुकितम् ॥१२०॥

---

*तत्राग्निदिशीति पाठः शोभनः प्रकरणसामर्थ्यात् । तत्र वेति पाठः मुद्रितपुस्तके ।

|| शताङ्क इति मुद्रिते पुस्तकेऽशुद्धः पाठः ।

+पलाका इति मुद्रिते पुस्तकेऽशुद्धः पाठः ।

वयं क्रोडास्यायाः शूकरमुख्याः देव्याः सम्बन्धि, शताङ्गेषु आयोधनरथेषु मूर्धन्यमायोधनरथम् अनिशं सततम् अधिहृदयं = हृदयमध्ये कुर्मः, तं रथं हृदये ध्यायामः। स च रथः रत्नधाम्नः = चिन्तामणिगेहस्य रुद्रदिशि = ईशानकोणे स्थितः । किञ्च रुचिराणां सुन्दराणां शलाकानां प्रपञ्चेन—समहेन कञ्चुकितो वेष्टितोऽसौ एतदायोधनरथचतुष्टयस्य भवनस्य चतुर्षु कोणेषु स्थितस्य वर्णनं स्तवनं च ॥१२०॥

**परितो देवीधाम्नः**

**प्रणीतवासा मनुस्वरूपिण्यः ।**

**कुर्वन्तु रश्मिमाला-**

**कृतयः कुशलानि देवता निखिलाः ॥१२१॥**

परादेव्या धाम्नः—चिन्तामणिगेहस्य परितः चतुर्षु दिक्षु प्रणीतवासाः = कृतवसतयः मनुस्वरूपिण्यः = मनुर्मन्त्रस्तद्रूपाः मन्त्रात्मिका इति, चतुर्दशसंख्याका इति वा, मनवो यतश्चतुर्दश । रश्मिमालावदाकृतयो देदीप्यमानाकृतयः, मालावन्मण्डले स्थिताश्च निखिलास्तत्रत्या देवताः नः कुशलानि-भद्राणि कुर्वन्तु ॥१२१॥

**प्राग्द्वारस्य भवानी-**

**धाम्नः पार्श्वद्वयारचितवासे ।**

**मातङ्गीकिटिमुख्यौ**

**मणिसदने मनसि भावयामि चिरम् ॥१२२॥**

मणिसंदने-चिन्तारत्नभवने; भवानीधाम्नः=भवानीस्यानस्य यत् प्राग्द्वारम्=पुरःस्थिते पार्श्वे वर्तमानं पुरोद्वारं, तस्य पार्श्वद्वये= दक्षिणवामयोर् आरचितो वासो याभ्यां ते मातङ्गी च किटिमुखी चेति तन्नामके देव्यौ मनसि भावयामि चिरम् । किटिर्वराहः, तन्मुखी-वराहवदनेति ॥१२२॥

योजनयुगलाभोगा
तत्क्रोशपरिणाहयैव भित्त्या च ।
चिन्तामणिगृह-भूमि-
र्जीयादाम्नायमयचतुर्द्वारा ॥१२३॥

योजनयुगलमाभोगो विस्तारो यस्याः सा, चिन्तामणिगृहेण अधिष्ठिता भूमिः, यस्यां भूमौ चिन्तामणिगृहं तिष्ठति सा भूमिर्योजनद्वयपरिमाणा । तत्क्रोशपरिणाहया क्रोशद्वयं परिणाहो विस्तारो यस्याः तयैव भित्त्या युक्ता सा । तस्यां भूमौ चिन्तामणि-गृहस्य परितः क्रोशद्वयायामा भित्तिरस्ति इति । आम्नायमयाः= शास्त्रमयाश्चत्वारो द्वारा यस्याः सा भूमिर्जीयात् ॥१२३॥

द्वारे द्वारे धाम्नः
पिण्डीभूता नवीनबिम्बाभाः ।
विदधतु विपुलां कीर्तिं
दिव्या लौहित्यसिद्धयो देव्यः ॥१२४॥

धाम्नः=चिन्तामणिगृहस्य द्वारे द्वारे-एकैकस्मिन् द्वारे, नवीनं यद् बिम्बफलं तस्याभेवाभा यासां ताः पिण्डीभूताः=एकत्रीभूताः लौहित्यसिद्धयो नाम देव्योऽस्माकं विपुलां कीर्तिं विदधतु=अस्मान् कीर्तिमतः सम्पादयन्तु ।।१२४।।

मणिसदनस्यान्तरतो
महनीये रत्नवेदिकामध्ये ।
बिन्दुमयचक्रमीडे
पीठानामुपरि विरचितावासम् ॥१२५॥

मणिसदनस्य चिन्तामणिगृहस्य अन्तरतो=मध्ये स्थिते; महनीये पूजनीये; रत्ननिर्मिताया वेदिकाया मध्यभागे स्थितं बिन्दुमयं चक्रमहमीडे–स्तौमि । तच्च पीठानामुपरि विरचितः आवासो वसतिः येन तत् तथाभूतम् ॥१२५॥

चक्राणां सकलानां
प्रथममधः सीमफलकवास्तव्याः ।
अणिमादिसिद्धयो मा-
मवन्तु देवीप्रभास्वरूपिण्यः ॥१२६॥

सकलानामपि चक्राणामधःसीम्नि निम्नतमायां भूमौ यत् फलकं पट्टकाष्ठं तत्र वास्तव्याः=निवासिन्यो, देव्याः या प्रभा कान्तिः तत् स्वरूपिण्यः– सैव स्वरूपं यासां ताः; अणिमादिसिद्धयो-

ऽष्टौ मामवन्तु — रक्षन्तु प्रथमम् । अनन्तरमन्याः उत्कृष्टतरा या देव्यस्ता अपि मां रक्षन्तु । अत्र शाक्ते मार्गे सिद्धयो नैव विघ्नकारिण्यः, अपितु शिवभावसाक्षात्कारिण्य एव । अनुभूते स्वस्य सृष्टयादिकरणसामर्थ्ये सुतरां स्वस्य शिवतायां विश्वासो दृढतरो भवति योगिनः ॥१२६॥

अणिमादिसिद्धिफलक-

स्योपरिहरिणाङ्कखण्डकृतचूडाः ।

भद्रं पक्ष्मलयन्तु

ब्राह्मीप्रमुखाश्च मातरोऽस्माकम् ॥१२७॥

अष्टसिद्धीनामाश्रयभूतस्य फलकस्योपरि हरिणाङ्कस्य चन्द्रस्य खण्डैः— कलाभिः कृतचूडाः=सम्पादितशेखराः ब्राह्मीप्रमुखाः= ब्राह्मी-माहेश्वर्याद्याः अष्टौ मातरो मातृकाः अस्माकं भद्रं कल्याणं पक्ष्मलयन्तु=पक्ष्मयुक्तमिव परितः परिवर्धमानं कुर्वन्तु, अथवा यथा-पक्ष्माणि चक्षुषोः रक्षां कुर्वन्ति तथैव मातरोऽस्माकं कल्याणरक्षाकरा-नुपायान् साधयन्तु ॥१२७।

तस्योपरि मणिफलके

तारुण्योत्तुङ्गपीनकुचभाराः ।

संक्षोभिणीप्रधानाः

भ्रान्ति विद्रावयन्त दश मुद्राः ॥१२८॥

तस्य ब्राह्म्यादीनामाश्रयस्योपरि मणिमये फलकान्तरे स्थिताः तारुण्येन यौवनेन उत्तुङ्गाः उच्चाः पीनाः स्थूलतराश्च कुचभाराः स्तनकलशभारा यासां ताः संक्षोभिणीप्रभृतयो दश मुद्राः =मुद्रानाम-कवर्गभाजो देव्यः अथवा मुद्राधिष्ठातृदेवताः नो भ्रान्तिम् अज्ञान विद्रावयन्तु=दूरीकुर्वन्तु ॥१२८॥

**फलकत्रयस्वरूपे**

**पृथुले त्रैलोक्यमोहने चक्रे ।**

**दीव्यन्तु प्रकटाख्या-**

**स्तासां कर्त्री च भगवती त्रिपुरा ॥१२९॥**

इतश्चक्राणां स्तुतिः १४७ तमं पद्यं यावत्, तत्राधिष्ठातृदेवतानां चापि । फलकत्रयस्वरूपे विशालं त्रैलोक्यमोहननाम्नि चक्रे स्थिताः प्रकटाख्याः=प्रकटाः आख्याः यासां ताः, अथवा प्रकटा इति वर्गनाम यासां ता देव्यस्तासां च कर्त्री तासु प्रशासनसम्पादिका ताः प्रेरयन्ती त्रिपुरा इति सर्वाः अपि एताः दीव्यन्तु अनुग्रहादिलीलाः सम्पादयन्तु नितराम् ॥१२९॥

**तदुपरि विपुल धिष्ण्ये**

**तरलदृशस्तरुणकोकनद्भासः ।**

**कामाकर्षिण*याद्याः**

**कलये देवीः कलाधरशिखण्डाः ॥१३०॥**

*कामार्षण्याद्या इति मु.

प्रकटाख्यानां देवीनां स्थानादुपरि स्थिते विपुले विशाले धिष्ण्ये—लोके, चक्रे वा, मणिसंदनस्योच्चतरायां भूमौ, तरलाः—चञ्चला दृशो यासां ताः, तरुणकोकनदस्य=सुविकसितस्य रक्तकमलस्य भाः इव भाः यासां ताः, अरुणकान्तिसमृद्धाः, कलाधराः=चन्द्राः शिखण्डेषु शेखरेषु यासां ताश्चन्द्रकलाशेखराः कामाकर्षिण्याद्याः गुप्ततरयोगिन्यः षोडश देवीः कलये हृदि भावयामि ॥१३०॥

सर्वाशापरिपूरकचक्रे-
ऽस्मिन् गुप्तयोगिनीसेव्या ।
त्रिपुरेशी मम दुरितं
तुद्यात्** कण्ठावलम्बिमणिहारा ॥१३१॥

अस्मिन् सर्वासामाशानां परिपूरके तन्नामके षोडशारे चक्रे; गुप्ताभिः=रहस्यस्वरूपाभिर्योगिनीवर्गसम्बन्धिनीभिर्देवीभिर्गुप्ततरेतिसमाख्याभिः सेव्या कण्ठेऽवलम्बी लम्बमानो मणिहारो यस्याः सा, त्रिपुरेशी नाम देवी मम दुरितं पापजालं तुद्यात्—पीडयेत्, नाशयेदिति ॥१३१॥

तस्योपरि मणिपीठे
ताम्राम्भोरुहदलप्रभाशोणाः ।
ध्यायाम्यनङ्गकुसुमा-
प्रमुखा देवीश्च विधृतकूर्पासाः ॥१३२॥

---

**तृप्यतु इति—क.

तस्य चक्रस्योपरि मणिमये पीठे स्थिताः, ताम्र-रक्तवर्णं यदम्भोरुहं—कमलं, तस्य दलानां प्रभावत् शोणकान्तयः, विधृताः कूर्पासाः अर्धचोलकाः कञ्चुलिकाः याभिस्ताः, अनङ्गकुसुमाख्या देवी प्रमुखा प्रधाना यासां ताः देवीश्च ध्यायामि अष्टौ, गुप्ततरयोगिन्य एता अष्टदले चक्रे स्थिताः ॥१३२॥

संक्षोभकारकेऽस्मि-
न्श्चक्रे श्रीत्रिपुरसुन्दरी साक्षात् ।
गोप्त्री गुप्ततराख्या
गोपायतु मां कृपार्द्रया दृष्ट्या ॥१३३॥

विश्वसंक्षोभकारकेऽष्टदलेऽस्मिँश्चक्रे स्थिता साक्षाद् दृश्यमाना देवीत्रिपुरसुन्दरी मां कृपार्द्रया दृष्ट्या गोपायतु—संसृतिसमुद्रात् तारयतु । यतः सैव गुप्ततरा इति समाख्यावती देवी गोप्त्री—जगत्पालयित्री ॥१३३॥

संक्षोभिणीप्रधानाः
शक्तीस्तस्योर्ध्ववलयकृतवासाः ।
आलोलनीलवेणी-
रन्तः कलयामि यौवनोन्मत्ताः ॥१३४॥

तस्य चक्रस्योर्ध्ववलये ऊर्ध्वस्थे मण्डले कृतवासाः; आलोलाः चञ्चला नीलाश्च श्यामाश्च वेणयो यासां ताः, यौवनेन उन्मत्ताः,

प्रौढयौवनाः, संक्षोभिणी नाम देवी प्रधाना यासां ताः, शक्तीः परमेश्वरस्य, अन्तः हृदयमध्ये कलयामि ध्यायामि ॥१३४॥

सौभाग्यदायकेऽस्मिँ-
श्चक्रेशी त्रिपुरवासिनी जीयात् ।
शक्तीश्च सम्प्रदायाभिधाः
समस्ताः प्रमोदयन्त्वनिशम् ॥१३५॥

अस्मिन् सौभाग्यदायके चतुर्दशदले चक्रेऽधिष्ठिता त्रिपुरवासिनी नाम चक्रेश्वरी जीयादित्याशीः । सा त्रिपुरवासिनी देवी समस्ताः सम्प्रदायाभिधाः तन्नाम्नीः शक्तीर्जीयात्, तासु सर्वोत्कर्षेण वर्तताम् । ताश्च शक्तयः सा च देवी अस्मान् अनिशं=सदैव प्रमोदयन्तु । अत्र चक्रे इति सप्तमी, चक्रेशीति चक्रपदं पूर्वपदम् । उभयत्र देहलीदीपन्यायेन सम्बन्धः । शक्तीरिति स्वाच्छन्द्याद्वा प्रयोगः (साधुः प्रयोगः शक्तय इति) उपरिष्टाद् व्याख्यातेन वा प्रकारेणान्वयः ॥१३५॥

मणिपीठोपरि तासां
महति चतुर्हस्तविस्तृते वलये ।
सन्ततविरचितवासाः
शक्तीः कलयामि सर्वसिद्धिमुखाः ॥१३६॥

तासां सम्प्रदायाभिधानां शक्तीनां मणिपीठस्योपरि महति चतुर्हस्तपरिमाणे विस्तृते वलये—मण्डले, सन्ततं विरचितो वासो

याभिस्ताः, सर्वसिद्धिमुखा प्रधाना यासु, ताः, शक्तीः कलयामि। चित्ते तः ध्यायामि ॥१३६॥

सर्वार्थसाधकाख्ये
चक्रेऽमुष्मिन् समस्तफलदात्री।
त्रिपुरा श्रीर्मम कुशलं
दिशतादुत्तीर्णयोगिनीसेव्या ॥१३७॥

अमुष्मिन् प्राग्वर्णिते सर्वार्थसाधके चक्रे समस्तानां विविधभोग-मोक्षाख्यानां फलानां दात्री, उत्तीर्णाः—ऊर्ध्वं तीर्णाः, ऊर्ध्वासु पदवीषु संक्रान्ता या योगिन्यो नाम देव्यस्ताभिः सेव्या त्रिपुरा नाम श्रीः भोगमोक्षलक्ष्मीर्मम कुशलं दिशतात् ॥१३७॥

तासां निलयस्योपरि
धिष्ण्ये कौसुम्भकञ्चुकमनोज्ञाः।
सर्वाज्ञाद्याः देव्यः
सकलाः सम्पादयन्तु मम कीर्तिम् ॥१३८॥

तासां शक्तीनां निलयस्य स्थानस्य उपरितने धिष्ण्ये-लोके कौसुम्भवर्णेन कञ्चुकेन मनोज्ञाः-मनोहराः सर्वाज्ञाप्रभृतयो नाम देव्यः सकला मम कीर्तिं सम्पादयन्तु ॥१३८॥

चक्रे समस्तरक्षा-
करनाम्न्यस्मिन् समस्तजनसेव्याम्।

मनसि निगर्भासहितां

मन्ये श्रीत्रिपुरमालिनीं देवीम् ॥१३९॥

अस्मिन् समस्तरक्षाकरनम्नि द्वादशारे देवीनां चक्रे समस्तैर्जीवैः सेवनीयां निगर्भदेवासहितां श्रीत्रिपुरमालिनीं नाम देवीं मनसि मन्ये—ध्यायामि ॥१३९॥

सर्वाज्ञासदनस्योपरि

चक्रे विपुले समाकलितगेहाः ।

वन्दे वशिनीमुख्याः

शक्तीः सिन्दूररेणुरुचः ॥१४०॥

सर्वाज्ञासदनस्योपरि स्थिते विपुले चक्रे समाकलितं-सम्पादितं स्वं गेहं याभिस्ताः, सिन्दूररेणुवदरुणा रुक् कान्तिर्यासां ताः, वशिनी मुख्या प्रधाना यासां ताः, शक्तीरहं वन्दे । अत्र सर्वाज्ञासदनस्य परिचयविशेषो नैव दत्तः कविना । स च शास्त्रान्तरेभ्य ऊह्यः ॥१४०॥

श्रीसर्वरोगहराख्य-

चक्रेऽस्मिँस्त्रिपुरपूर्विकां सिद्धाम् ।

वन्दे रहस्यनाम्ना

वेद्याभिः शक्तिभिः सदा सेव्याम् ॥१४१॥

उपर्युक्ते सर्वरोगहरनाम्नि विपुले चक्रे वसुकोणे स्थितां त्रिपुर इति पदं पूर्वं यस्यास्तां सिद्धां त्रिपुरसिद्धेतिनाम्नीं देवीं रहस्यमयेन नाम्ना वेद्याभिर्ज्ञेयाभिः शक्तिभिः सदैव सेवनीयां तां त्रिपुरसिद्धामहं वन्दे ॥१४१॥

**वशिनीगृहोपरिष्टाद्**
**विंशतिहस्तोन्नते महापीठे ।**
**शमयन्तु शत्रुवृन्दं**
**शस्त्राण्यस्त्राणि चादिदम्पत्योः ॥१४२॥**

वशिनीप्रभृतीनां देवीनां सदनस्योपरि विंशतिहस्तपरिमाणोन्नते महति पीठे निहितानि आदिदम्पत्योः ललिताकामेश्वरयोः समस्तभावाभावात्मकस्य विश्वस्य मूलजनकयोः शस्त्राणि अस्त्राणि च नः शत्रुवृन्दं कामक्रोधलोभादिसमूहम् आणवमायीयकार्ममलसंघातं च शमयन्तु ॥१४२॥

**शस्त्रसदनोपरिष्टाद्**
**वलये वलवैरिरत्नसंघटिते ।**
**कामेश्वरीप्रधानाः**
**कलये देवीः समस्तजनवन्द्याः ॥१४३॥**

शिवशक्त्योः शस्त्रागारस्योपरि स्थिते, वलो नामासुरः, तस्यवैरी—इन्द्रः तन्नाम्ना रत्नेन इन्द्रनीलमणिना घटिते सम्पादिते वलये

मण्डले, मण्डलाकारे कोष्ठे स्थिताः समस्तैर्जनैर्वन्दनीयाः कामेश्वरी प्रधाना यासु ताः देवीरहं कलये—चित्ते ध्यायामि ॥१४३।

चक्रेऽत्र सर्वसिद्धिप्रद-
नामनि सर्वफलदात्री ।
त्रिपुराम्बावतु सततं
परापररहस्ययोगिनीसेव्या ॥१४४॥

अत्र सर्वसिद्धिप्रदनामके चक्रे स्थिता सर्वेषां वाञ्छितानां फलानां दात्री पररूपाः अपररूपाः परापररूपाश्च या रहस्यस्वरूपाः योगिन्यस्ताभिः सेव्या त्रिपुराम्बा नः सततम् अवतु – रक्षतु ॥१४४॥

कामेश्वरीगृहोपरिवलये
विविधमनुसम्प्रदायज्ञाः ।
चत्वारो युगनाथा
जयन्तु मित्रेशपूर्वकाः गुरवः ॥१४५॥

कामेश्वर्याः देव्याः गृहस्योपरि स्थिते वलये-मण्डले विविधान् मनुसम्प्रदायान्=मन्त्रोपासनासम्प्रदायान् जानन्तीति तथाविधाः; चत्वारो युगनाथाः—कृतादिषु युगेषु कौलादिसम्प्रदायप्रवर्तका रहस्य-चर्यामन्त्रप्रयोगादिगुरवः मित्रेशपूर्वकाः मित्रेशादयो जयन्तु, सर्वो-त्कर्षेण वर्तन्ताम् । जयन्तीति शोभनतरः पाठो भवेत् । अन्यत्र ते गुरवः क्रमेण (१) खगेन्द्रनाथः (२) कूर्मनाथः, (३) मेषनाथः (४) मत्स्येन्द्रनाथः इति । कदाचित् खगेन्द्रनाथ एवात्र मित्रेशनाथ इत्यु-

षतः स्यात् । मित्रेशस्तावत् सूर्यो भगवान् । स एवाकाशगामिषु सर्वोत्तमत्वेन खगेन्द्र इति ॥१४५॥

नाथभवनोपरिष्टान्-

नानारत्नचयमेदुरे पीठे ।

कामेश्याद्या* नित्याः

कलयन्तु मुदं तिथिस्वरूपिण्यः ॥१४६॥

चतुर्णां नाथानां भवनस्योपरि नानाविधानां रत्नानां समहै-र्मेदुरे—सान्द्रस्निग्धकान्तियुक्ते पीठे स्थिताः कमेशीमुख्याः=कामेश्वरीप्रभृतयो नित्याः इति नाम्न्यो देव्यो नो मुदं हर्षं कलयन्तु । ताश्च पञ्चदशतिथिस्वरूपिण्यः, तिथीनामधिष्ठात्र्यः पंचदशसंख्याकाः वा ॥१४६॥

नित्यासदनस्योपरि

निर्मलमणिनिवहविरचिते धिष्ण्ये ।

कुशलं षडङ्गदेव्यः

कलयन्त्वस्माकमुत्तरलनेत्राः ॥१४७॥

नित्याख्यानां देवीनां सदनस्योपरि निर्मलेन मणिसमूहेन निर्मिते धिष्ण्ये—लोके, देवसदने स्थिताः उत्तरलनेत्राः=चञ्चल-नेत्राः षट्संख्याकाः अङ्गदेव्यो अस्माकं कुशलं कलयन्तु ॥१४७॥

---

*कामेशाद्याः इति मुद्रिते पुस्तकेऽशुद्धः पाठः । स्त्रीलिङ्गत्वमेवात्रोचितम् ।

सद्नस्योपरि तासां
सर्वानन्दमयनामके बिन्दौ ।
पञ्च ब्रह्माकारं
मञ्चं प्रणमामि मणिगणाकीर्णम् ॥१४८॥

तासामङ्गदेवीनां सदनस्य कोष्ठस्योपरि वर्तमाने सर्वानन्दमयनामके बिन्दौ-बिन्दुस्वरूपे श्रीचक्रस्य मध्यमे केन्द्रे स्थित पञ्चब्रह्माकारं=पञ्च' ब्रह्माणि विश्वबृंहकाणि 'ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्यानि पञ्चकारणानि आकारो यस्य तं मणिगणैराकीर्णं मञ्च प्रणमामि । ब्रह्मादयश्चत्वारस्तस्य पादाः सदाशिवश्च फलकः ॥१४८॥

परितो मणिमञ्चस्य
प्रलम्बमाना नियन्त्रिता पाशैः ।
मायामयी जवनिका*
मम दुरितं हरतु मेचकच्छाया ॥१४९॥

मणिघटितस्य पंचब्रह्मात्मकस्य मञ्चस्य परितः पाशैः नियन्त्रिता बद्धा, मेचका श्यामला छाया कान्तिर्यस्याः सा तथाभूता; पाशै रज्जुमयैः सूत्रमयैर्वा नियन्त्रिता उपरि बद्धा सती, मञ्चस्य परितः प्रलम्बमाना मायामयी=मायातत्त्वमयी वा मायाशक्तिमयी वा जवनिका मम दुरितं हरतु ॥१४९॥

---

*यवनिका इति मु.

मञ्चस्योपरि लम्बन्-
मदनीपुंनागमालिकाभरितम् ।
हरिगोपमयवितानं
हरतादालस्यमनिशमस्माकम् ॥१५०॥

मञ्चस्योपरि लम्बल्लम्बमानं मदनी=धत्तूरकपुष्पं, पुंनागो नागकेसराख्यं पुष्पं, तयोर्मालिकाभिर्भरितं, हरिगोपमयं=इन्द्रगोपनिर्मितं रक्तवर्णं वितानमुल्लोचश्चन्दुआ इति भाषायाम् अस्माकमालस्यं हरतात् ॥१५०॥

पर्यङ्कस्य भजामः
पादान् बिम्बाम्बुदेन्दुहेमरुचः ।
अजहरिरुद्रेशमया-
ननलासुरमारुतेशकोणस्थान् ॥१५१॥

पर्यङ्कस्य=मञ्चस्य बिम्ब-अम्बुद-इन्दु-हेम-रुचः क्रमेण बिम्बवद्रक्तवर्णं अम्बुदवच्छ्यामलकान्तिम् इन्दुवच्छूक्लरुचि हेमवत्पीतकान्तिम् (एतेषां रुगिव रुग्येषां तान्) एतान् अज-हरि-रुद्र-ईश-मयान् ब्रह्मादीन् ईश्वरान्तांश्चतुरः पादान्, अनल-असुर-मारुत-ईश-कोणस्थान् क्रमेणाग्नेये, नैरृते, वायव्ये; ऐशान्ये च कोणे स्थितान् वयं भजामः ॥१५१॥

फलकं सदाशिवमयं
प्रणौमि सिन्दूररेणुकिरणाभम् ।

आरभ्याङ्केशीनां
सदनात् कलितं च रत्नसोपानम् ॥१५२॥

उपरितनं सदाशिवात्मकं मञ्चस्य फलकं सिन्दूरस्य रेणोः धूलेर्ये किरणास्तेषामाभेवाभा यस्य तमत्यन्तशोणवर्णमिति, फलकं प्रणौमि। अङ्केशीनाम् अङ्गदेवीनां पूर्ववर्णितात् सदनाद् आरभ्य कलितं निर्माय योजितं रत्नमयं सोपानं=सोपानश्रेणिमपि प्रणौमि ॥१५२॥

पट्टोपधानगण्डक-
चतुष्टयस्फुरितपाटलास्तरणम्।
पर्यङ्कोपरि घटितं
पातु चिरं हंसतूलशयनं नः ॥१५३॥

पट्टः—कौशेयं तन्निर्मितं यदुपधानं, यच्च तन्निर्मितमेव गण्डकानां=पर्यङ्के चतुर्षु दिक्षु न्यस्यमानानां मण्डलाकाराणां लघूनामुपधानानां; गण्डीति महाराष्ट्रादिभाषासु प्रसिद्धानां; चतुष्टयं तेन स्फुरितं देदीप्यमानं यत् पाटलवर्णमास्तरणं प्रच्छदपटरूपं तदस्मिन्नस्तीति तथाभूतं हंसतूलैः हंसगरुद्भिर्निर्मितं शयनं शयनीयं पर्यङ्कस्योपरि घटितम् आस्तृतं सदस्मान् चिरं पातु ॥१५३॥

तस्योपरि निवसन्तं
तारुण्यश्रीनिषेवितं सततम्।

आवृन्तफुल्लहल्लक-

मरीचिकापुञ्जमञ्जुलच्छायम् ॥१५४॥

इतः षड्भिः कुलकं भगवत्-कामेश्वरवर्णनपरम्। कामेशं मनसि कुर्महे सततमिति मुख्यं वाक्यम्। शेषं विशेषणजातं कामेश्वरस्य भगवतः। तस्य शयनीयस्योपरि निवसन्तं-सदोपविष्टम्, सततमेव तारुण्यस्य यौवनस्य श्रिया निषेवितं, सततयुवानम्, आवृन्तं फुल्लानि यानि हल्लकपुष्पाणि=कल्हाराणि=रक्तकमलानीति, तेषां मरीचिकाः=किरणाः, तासां पुञ्जः-समूहः, तद्वन्मञ्जुला=कमनीया छाया शरीर-कान्तिर्यस्य तं, शोणकान्तिम् कामेशं मनसि कुर्महे ॥१५४॥

सिन्दूरशोणवसनं

शीतांशुस्तवकचुम्बितकिरीटम्।

कुङ्कुमतिलकमनोहर*-

कुटिलालिकहसितकुमुदबन्धुशिशुम् ॥१५५॥

सिन्दूरवच्छोणवसनं—रक्तपरिधानं, शीतांशुः=चन्द्रः स एव स्तवकः=पुष्पगुच्छः, तेन चुम्बितं स्पृष्टमलङ्कृतं किरीटं मुकुटं यस्य तं, चन्द्रकलाशेखरमित्यर्थः; कुङ्कुमनिर्मितं यत्तिलकं तेन मनोहरं यत् कुटिलम्=अर्धचन्द्राकारमर्धवर्तुलं चालिकं=ललाटं तेन हसितः =अधरीकृतः कुमुदपुष्पविकासकस्य कुमुदबान्धवस्य चन्द्रस्य शिशुः बालकः=अर्धचन्द्रो येन तम्, अथवा तृतीयनेत्र-त्रिपुण्ड्रसमावृता-

---

*कस्तूरीतिलकमनोज्ञं कुटिलालकभरितकुमुद ... इति क

च्छेषस्य ललाटभागस्य चन्द्रकलयात्र सादृश्यं कवेरभिप्रेतम । तेन कुमुदबन्धुशिशुरत्र द्वितीयातिथेश्चन्द्रकला ॥१५५॥

पूर्णेन्दुबिम्बवदनं
फुल्लसरोजातलोचनंत्रितयम् ।
तरलापातरङ्गित-
शफराङ्क*नशास्त्रसम्प्रदायार्थम् ॥१५६॥

पूर्णचन्द्रमण्डलमिव वदनं यस्य तं; फुल्लं यत् सरोजातं कमलं तदिव लोचनत्रितयं नेत्रत्रयं यस्य तं, तरलेन अपाङ्गेन-नेत्रकोणेन कटाक्षेणेति तरङ्गितो नितरां परिस्पन्दमानतामापादितः शफराङ्कनस्य कामदेवस्य यच्छास्त्रं कामशास्त्रं तस्य यः सम्प्रदायः=परम्परागतः क्रमः, तस्य अर्थः=तात्पर्यं येन, सर्वत्र विविधकामव्यापारोल्लासकम् ॥१५६॥

मणिमयकुण्डलपुष्यन्-
मरीचिकल्लोलमांसलकपोलम् ।
विद्रुमसहोदराधर-
विसृमर-**सुस्मित-किशोरसञ्चारम् ॥१५७॥

मणिमयाभ्यां कुण्डलाभ्यां पुष्यन्त्यः वृद्धिं प्रसारं वा प्राप्नुवन्त्यो या मरीचिकाः किरणाः तासां कल्लोलेन स्पन्दनेन मांसलतां

---

*स्मराङ्गनशास्त्र इति क.

**सस्मित इति मु.

प्राप्तौ कपोलौ यस्य तं तासां कान्त्या स्फुरन्त्या यस्य कपोलौ विशेष-मांसलाविव दृश्यमानाविति; विद्रुममणेः सहोदरौ=शोणवर्णत्वेन यावधरौ—ओष्ठौ ताभ्यां विसृमरो=विसरणशीलः स्पन्दनशीलः सुस्मितस्य-शोभनस्य मनोहरस्य स्मितस्य किशोरसञ्चारः=मन्द-मन्दः सञ्चारो यस्य तं कामेशं मनसि कुर्महे ॥१५७॥

आमोदिकुसुमशेखरम्
आनीलभ्रूलतायुगमनोज्ञम् ।
वीटीसौरभवीची-
द्विगुणितवक्त्रारविन्दसौरभ्यम् ॥१५८॥

आमोदी सुगन्धिः कुसुमशेखरो यस्य तम्; आनीलेन श्याम-वर्णेन भ्रूलतायुगेन मनोज्ञम्, ताम्बूलवीटी-सौरभस्य या वीचयो लहर्यस्ताभिर्द्विगुणितं वक्त्रारविन्दस्य-वदनकमलस्य सौरभ्यं सुगन्धो-यस्य तम् ॥१५८॥

पाशाङ्कुशेक्षुचाप-
प्रसवशरस्फुरितकोमकराब्जम् ।
काश्मीरपङ्किलाङ्गं
कामेशं मनसि कुर्महे सततम् ॥१५९॥

पाशः=जन्तुनिकायबन्धनशक्तिद्योतकः, अङ्कुशः=बन्धन-भञ्जकानुग्रहशक्तिद्योतकः, इक्षुचापः पुष्पशराश्च=सृष्टयादिकृत्यानि

प्रति स्वाभाविकौन्मुख्य-रूपस्यानिर्वचनीयस्य कामात्मनोऽनिरुद्धस्येच्छाशक्त्यैश्वर्यस्य द्योतका, एतैश्चतुर्भिरायुधैः स्फुरितानि देदीप्यमानानि कोमलानि सुमसृणानि कराब्जानि=करकमलानि यस्य तम्; काश्मीरेण=कुङ्कुमानुलेपेन पङ्किलमङ्गं शरीरं यस्य तम्, कामेशं विश्वात्मकपारमेश्वरक्रीडाविषयककामनारूपायाः पारमैश्वर्याः इच्छाशक्तेरीशं परमेश्वरं कामेशसंज्ञं मनसि कुर्महे ध्यायामः सततम्, सततं तदैक्यात्मकसमावेशपरा भवामः ॥१५९॥

तस्याङ्कभुवि निषण्णां

तरुणकदम्बप्रसूनकिरणाभाम् ।

शीतांशुखण्डचूडां

सीमन्तन्यस्तसान्द्रसिन्दूराम् ॥१६०॥

इतः परं १६९ तमं पद्यं यावत् दशभिः कुलकम् । भगवत्याः ललिताख्यायास्त्रिपुरसुन्दर्या वर्णनमत्र । अत्र सुबहूनि विशेषणानि । तेषामन्वयः "अन्तः कलयामि सुन्दरीमनिशम्" इत्यनेन वाक्यखण्डेन । कामेश्वरस्याङ्क उपविष्टाम्, अभिनवफुल्लकदम्बपुष्पकिरणाभाम्, शीतांशुखडः=चन्द्रकला चूडायां यस्यास्ताम्, सीमन्ते केशमध्ये न्यस्तं सिन्दूरं यस्यास्ताम्, कदम्बपुष्पमत्रारुणवर्णं बोध्यं न पुनः पीतवर्णम् ॥१६०॥

कुङ्कुमललामभास्व-

न्निटिलां कुटिलतरचि*ल्लिकायुगलाम् ।

---

*झिल्लिकेति — क.

नालीकतुल्यनयनां*
नासाञ्चलनटितमौक्तिकाभरणाम् ॥१६१॥

कुङ्कुमकृतं ललामं—तिलकं तेन भास्वद्दीप्यमानं निटिलं ललाटं यस्यास्ताम्; कुटिलतरं चिल्लिकायुगलं=भ्रूयुगलं यस्यास्ताम्; नालीकं=नाले भवं नालाश्रितं कमलं, तत्तुल्ये नयने यस्यास्तां, कमलनयनां, नासाञ्चले=नासाछिद्रभित्तौ नटितं=नर्तनशीलं मौक्तिकमयमाभरणं यस्यास्ताम् सुन्दरीम् ॥१६१॥

अङ्कुरितमन्दहासाम्
अरुणाधरकान्तिविजितबिम्बाभाम्।
कस्तूरीमकरीयुत-+
कपोलसङ्क्रान्तकनकताटङ्काम् ॥१६२॥

अङ्कुरितोऽभिव्यक्तमात्रो मन्दहासो यस्यास्तां, स्मितमुखीम्; अरुणवर्णयोरधरयोः कान्त्या विजिता विम्वफलस्याभा यया ताम्; कस्तूरीकृता या मकरी-मकराकारो विशेषकस्तेन युतौ यौ कपोलौ तयोरन्तः सङ्क्रान्तं कनकमयं ताटङ्कं कर्णभूषणं यस्यास्ताम् । कर्णभूषणयोः प्रतिबिम्बं कपोलयोः संक्रान्तमिति । अथवा लोलं ताटङ्कयुगलं पुनः पुनः कपोलौ स्पृशतीति ॥१६२॥

कर्पूरसान्द्रवीटी-
कवलितवदनारविन्दकमनीयाम् ।

---

*सदृश इति—क.

+कस्तूरिमकरिकायुत इति—क.

कम्बुसहोदरकण्ठ-

प्रलम्बमानाच्छमौक्तिककलापाम् ॥१६३॥

कर्पूरयुता या सान्द्रा स्निग्धा वीटी तया साधनभूतया कर्मभूतया वा कवलितं=कृतकवलं यद् वदनारविन्दं वक्त्रकमलं तेन कमनीयां-मनोहराम्; कम्बुसहोदरः शङ्खवच्छ्लक्ष्णवर्तुलो यः कण्ठस्तत्र प्रलम्बमानः ;ऊच्छः=धवलः मौक्तिककलापो यस्यास्ताम् ॥१६३॥

कह्लारदामकोमल-

भुजयुगलस्फुरितरत्नकेयूराम् ।

करपद्ममूलविलसत्-

काञ्चनमयकटकवलयसन्दोहाम् ॥१६४॥

कह्लाराख्यं यद्विशेषप्रकारकं कमलं तस्य दामवन्माल्यवत् कोमलं यद् भुजयुगलं तत्रः स्फुरिते देदीप्यमाने रत्ननिर्मिते केयूरे यस्यास्ताम् । करपद्मयोः मूले विलसन्—स्फुरन् शोभमानः काञ्चनमयानां सौवर्णानां कटकवलयानां सन्दोहः समूहो यस्यास्ताम् ॥१६४॥

पाणिचतुष्टयविलसत्-

पाशाङ्कुशपुण्ड्रचापपुष्पास्त्राम् ।

कूलङ्कषकुचशिखरां

कुङ्कुमकर्दमितरत्नकूर्पासाम् ॥१६५॥

पाणिचतुष्टये विलसन्ति शोभमानानि पाशादीनि चत्वार्यस्त्राणि यस्यास्ताम् । पाशाङ्कुशौ प्राग्वन्निग्रहानुग्रहकृत्यद्योतकौ, कामदेवीयान्यस्त्राणि च विविधकामनोन्मेषकारित्वं जीवेषु ध्वनयन्ति । इक्षुचापेन विविधभोगलोलुपतोद्भावकत्वं पुष्पबाणैश्च कामनोत्पादकत्वं जगति द्योतितम् । कूलङ्कषार्तिप्रवृद्धत्वादतिगुरुत्वाच्च कुचशिखरौ यस्यास्ताम्; कुङ्कुमेन काश्मीरजविलेपनेन कर्दमितः रत्नजटितः कूर्पासकः चोलीति प्रसिद्धं वक्षोवस्त्रं यस्यास्ताम् ॥१६५॥

अणुदायादवलग्नाम्
अम्बुदशोभासनाभि-रोमलताम् ।
माणिक्यखचितकाञ्ची-
मरीचिकाक्रान्तमांसलनितम्बाम् ॥१६६॥

अणोः परमाणोरपि दायादोऽपत्यं, परमाणोरप्यणुतरमिति, वलग्नं कटिर्यस्यास्तामत्यन्ततनुमध्यमां; अम्बुदस्य मेघस्य या शोभा = मेचका कान्तिस्तस्याः सनाभिः = सहोदरा अत्यन्तश्यामला रोमलता यस्यास्ताम्; माणिक्यैः रक्तवर्णरत्नविशेषैः खचिता जटिता या काञ्ची-कटिभूषणं, तस्याः मरीचिकाभिः—किरणावलीभिराक्रान्तौ सुमांसलौ सुपुष्टौ मण्डलाकारौ नितम्बौ यस्यास्ताम् ॥१६६॥

करभोरुकाण्डयुगलां
जङ्घाजितकामजैत्रतूणीराम् ।
प्रपदपरिभूतकूर्माम्
उत्तरलापाङ्गपोषितानङ्गाम् ॥१६७॥

करभवद्वर्तुलं श्लक्ष्णमूरुकाण्डयुगलं यस्यास्ताम्, अथवा– करिशुण्डादण्डवद्वर्तुलस्थूलावूरू यस्यास्ताम्, जङ्घाभिर्जितं कामदेवस्य जैत्रं सर्वत्र जयशीलं तूणीरं यस्यास्ताम्; प्रपदेन पादाग्रेण परिभूतस्तिरस्कृतः कूर्मो येन, ततोऽप्यधिकसुश्लक्ष्णो यस्याः पादाग्रस्ताम्; पल्लवसमानकान्तियुक्तमरुणाभं यत् पादयुगलं तेन मनोज्ञाम् ॥१६७॥

कमलभवकञ्जलोचन-

किरीटरत्नांशुरञ्जितपदाब्जाम् ।

उन्मस्तकानुकम्पाम्

उत्तरलापाङ्गपोषितानङ्गाम् ॥१६८॥

कमलभवो ब्रह्मा, कञ्जलोचनो विष्णुः तयोः किरीटरत्नानां मुकुटस्थरत्नानाम् अंशुभिः किरणै रञ्जिते पदाब्जे–पादकमले यस्यास्ताम्। उन्मस्तका सावधाना सुप्रवृद्धाचानुकम्पा करुणा—अनुग्रहंलीला यस्यास्ताम्; उत्तरलेन–सुचञ्चलेनापाङ्गेन—नेत्रप्रान्तभागेन, कटाक्षेणेति, पोषितो वर्धितोऽनङ्गः कामदेवो यया, सकलब्रह्माण्डस्थप्राणिषु विविधकामनोत्पादिकामिति ॥१६८॥

आदिमरसावलम्बाम्

अनिदंप्रथमोक्तिवल्लरीकलिकाम् ।

आब्रह्मकीटजननीम्

अन्तः कलयामि सुन्दरीमनिशम् ॥१६९॥

आदिमरसस्य शृङ्गारस्यावलम्बभूतामाधारभूताम्, न विद्यते कापि नामेदंप्रथमोक्तिः—प्रारम्भाविर्भावादिकथा यस्याः विषये तथाभूता अनाद्या या विश्ववल्लरी=जगत्परम्परा, तस्याः कलिकां, विश्वविकासारम्भभूता या कलिका तां विश्वविकासमूलकारणरुपाम्; ब्रह्मण आरभ्य कीटस्तम्बादिपर्यन्तं विश्वप्राणिनिकायजननीं सुन्दरीं कामेश्वरसहचरीं ललितां त्रिपुरसुन्दरीमन्तःस्वहृदये कलयामि-ध्यायामि ॥१६९॥

कस्तु क्षितौ पटीयान्

वस्तु स्तोतुं शिवाङ्कवास्तव्यम् ।

अस्तु चिरन्तनसुकृतैः

प्रस्तुतकाम्याय तन्मम पुरस्तात् ॥१७०॥

शिवस्य कामेश्वरस्याङ्कवास्तव्यं=तस्याङ्के निवासशीलं वस्तु=ललितादेवीरुपं स्तुत्यं वस्तु स्तोतुं क्षितौ कस्तु पटीयान्=न कोऽपि तस्याः स्तुतिं कर्तुं समर्थ इति । अस्माकं चिरन्तनसुकृतैः=प्राग्जन्मार्जितैः पुण्यैः तदेव वस्तु प्रस्तुतकाम्याय=प्रक्रान्तकाम्यकर्मपरिपूरणाय मम पुरस्तादस्तु सततं मम साक्षात्कारविषतां प्राप्नोतु ॥१७०॥

प्रभुसम्मितोक्तिगम्यं

परमशिवोत्सङ्गतुङ्गपर्यङ्कम् ।

तेजः किञ्चन दिव्यं

पुरतो मे भवतु पुण्ड्रकोदण्डम् ॥१७१॥

प्रभुसम्मिताभिरुक्तिभिर्निगमागमादिशास्त्रमयीभिरुक्तिभिर्गम्यं ज्ञातव्यं; परमशिवस्य परब्रह्मात्मकस्य परमेश्वरस्योत्सङ्ग एव समुत्तुङ्गं समुच्छ्रितम् पर्यङ्कं यस्य तत् किमपि दिव्यं तेजो ललितादेव्याख्यं महः मे पुरतो भवतु । तच्च तेजः पुण्ड्रकोदण्डम्—पुण्ड्रेक्षुरेव कोदण्डो धनुर्दण्डो यस्य तत्तथाविधम् ॥१७१॥

**मधुरिमभरितशरासं**
**मकरन्दस्यन्दिमार्गणोदारम्*** ।
**कैरविणीविटचूडं**
**कैवल्यायास्तु किञ्चन महो नः ॥१७२॥**

मधुरिमया भरितं शरासं धनुः यस्य तत्, पुण्ड्रेक्षुचापमिति, मकरन्दं मधु स्यन्दते प्रवहत्येभ्यः इति तथाभूताः मधुस्यन्दनशीला ये मार्गणाः पुष्पमया बाणास्तैरुदारमैश्वर्यशालि, कैरविणी-कुमुदिनी, तस्याः विटः प्रेमी चन्द्रः, स एव चूडायां यस्य तत्, किञ्चन ललितादेवीसमाख्यं महः तेजः संवित्प्रकाशः नः कैवल्याय—उत्कृष्टतराय मोक्षायास्तु; अस्मभ्यं परिपूर्णां मुक्तिं ददात्विति । १७२॥

**अक्षुद्रमिक्षुचापं**
**परोक्षमवलग्नसीमनि न्यक्षम् ।**
**क्षपयतु मे क्षेमेतरम्**
**उक्षरथप्रेमपक्ष्मलं तेजः ॥१७३॥**

---

*स्यन्दि इति मु.

अक्षुद्रमपरिमितं निस्सीममनवच्छिन्नत्वात्, इक्षुमयं चापं यस्य तत्, अवलग्नसीमनि = कटिप्रदेशस्थले परोक्षम् प्रत्यक्षाविषयं तस्यातिकृशत्वात्, त्रीण्यक्षीणि यस्य तत्, उक्षरथो-वृषभवाहनः शिवस्तद्विषयं यत् प्रेम तेन पक्ष्मलं पक्ष्मयुक्त—प्रवृद्ध प्रेमपरिस्पन्दं यत्तेजः संवित्-प्रकाशस्य विमर्शरूपत्वं तन्मे क्षेमेतरम्—अमङ्गलं क्षपयतु-नाशयतु ॥१७३॥

भृङ्गरुचिसङ्गरकरापाङ्गं

श्रृङ्गारतुङ्गमरुणाङ्गम् ।

मङ्गलमभङ्गुरं मे

घटयतु गङ्गाधराङ्गसङ्गि महः ॥१७४॥

भृङ्गस्य भ्रमरस्य या श्यामला रुचिः कान्तिस्तया सह सङ्गरकरो युद्धकारी स्पर्धावान् अपाङ्गो यस्य तत्; शृङ्गारे प्रेमरसेऽतितुङ्गमतिसमुन्नतम्; अरुणवर्णमङ्गं शरीरं यस्य तत्; गङ्गाधरस्य शिवस्य यदङ्गं शरीरं तस्य सङ्गि—तेन साकमेकीभूतवपुर्यन्महः तेजः—परिपूर्णाहंविमर्शात्मकं संवित्तेजस्त मेऽभङ्गुरं भङ्गरहितं मङ्गलं घटयतु सम्पादयतु ॥१७४॥

प्रपदाजितकूर्ममूर्जितकरुणां

मर्मरुचिनिमथनदेहम् ।

श्रितवर्म मर्म शम्भोः

किञ्चन मम नर्म शर्म निर्मातु ॥१७५॥

प्रपदेन पादाग्रेण जितः कूर्मो येन, अजिता प्रवृद्धा करुणा यस्य तत्; भर्मं काञ्चनं, भर्म स्यात् काञ्चने भृतावितिं मेदिनी। तस्य रुचेः कान्तेर्निर्मथनशीलः पराजयकरो देहो यस्य तत्, स्वर्णादपि रुचिरतरदेहम्; श्रितं धृतं वर्म-वक्षस्त्राणं येन तत्, शम्भोर्मर्मभूतं नर्म शृङ्गारक्रीडात्मकं, लक्षणया तत्सहायभूतं साधनभूतं च, किञ्चनेत्यनिर्वचनीयमवाङ्मनसगोचरं शम्भोर्नर्म मम शर्म-वाञ्छितभोगमोक्षोभयप्राप्तिरुपं महत् कल्याणं निर्मातु प्रकरोतु ॥१७५॥

**कालकुरलालिकालिम-**
**कन्दलविजितालि विधृतमणिवालि ।**
**मिलतु हृदि पुलिनजघनं**
**बहुलितगलगरलकेलि किमपि महः ॥१७६॥**

काला-कृष्णवर्णा या कुरलानामालिः—केशानां पंक्तिः, कुरलाश्चूर्णकुन्तला इति धरणी, तस्याः यः कालिमा, तस्य कन्दलैः समूहैर्विजिता अलयो-भ्रमराः येन तन्महः; विधृता मणिनिर्मिता वाली= कर्णभूषणविशेषो, वाली इति भाषायां, येन तन्महः, पुलिनवद्विशालं जघनं कटिपुरोभागो यस्य तद्; बहुलिता-प्रवर्धिता गलगरलस्य= गले गरलं यस्य तस्य केलिः—कामक्रीडा येन तत्, किमप्यवाङ्मनसगोचरं महः मे हृदि मिलतु, मम हृदयं सततमेव तस्य शुद्धविमर्शात्मकस्य परमेश्वरतासतत्त्वस्य महसः साक्षात्कारं करोतु ॥१७६॥

**कुङ्कुमतिलकितभाला**
**कुरुविन्दच्छायपाटलदुकूला ।**

करुणापयोधिवेला

काचन चित्ते चकास्तु मे लीला ॥१७७॥

कुङ्कुमेन तिलकितं भाल यस्याः सा, कुरुविन्दस्य रत्नविशेषस्य छायेवच्छाया कान्तिर्यस्य तादृशं कुरुविन्दकान्ति पाटलवर्णं च दुकूलवस्त्रं यस्याः सा; करुणायाः पयोधिः समुद्रस्तस्य वेला, स्वान्तःकृतकरुणासमुद्रा, काचन पारमेश्वरी-लीलात्मिका पराशक्तिर्मे चित्ते चकास्तु, सततं तस्याः साक्षात्कारो मे भवतु ।।१७७।।

पुष्पन्धयरुचिवेण्यः

पुलिनाभोगत्रपाकरश्रोण्यः।

जीयासुरिक्षुपाण्यः

काश्चन कामारिकेलिसाक्षिण्यः ॥१७८॥

पुष्पन्धयाः भ्रमराः, तेषां रुचिरिव रुचिर्यासां तास्तथाविधा वेणयो यासां ताः; पुलिनस्य सैकततटस्याभोगो विस्तारस्तस्य त्रपाकराः=लज्जाकरास्ततोऽप्यधिकविशालाः श्रोणयः कटिप्राग्भागा यासां ताः, इक्षुमयं चापं पाणिषु यासां ताः; काश्चन-अवाङ्मनसगोचराः, कामारिः शिवस्तस्य केलिः- कामक्रीडा, तस्याः साक्षिण्यः, तत्र सहायत्वात् तस्याः क्रीडायाः अनुभूतिं भजमानास्ताः जीयासुः—सर्वोत्कर्षेण वर्तन्ताम् ।।१७८।।

तपनीयांशुकभांसि
द्राक्षामाधुर्यनास्तिकवचांसि* ।
कतिचन शुचं महांसि
क्षपयन्तु कपालितोषितमनांसि ॥१७९॥

तपनीयं स्वर्णं तस्य अंशुकाः किरणाः तदिव भासः येषां तानि; द्राक्षाया माधुर्यस्य विषये नास्तिकानि तन्माधुर्यखण्डनकराणि वचांसि येषां तानि, तन्माधुर्यापेक्षया द्राक्षा अमधुरा प्रतिभातीति; कपालिनः शिवस्य तोषितं मनो यैस्तानि; कतिचन महांसि तेजांसि चिद्विमर्शरूपाणि नः शुचम् अनैश्वर्याख्यं बन्धनं क्षपयन्तु-विनाशयन्तु ॥१७९॥

असितकचमायताक्षं
कुसुमशरं कूलमुद्वहकृपार्द्रम् ।
आदिमरसाधिदैवतम्
अन्तः कलये हराङ्कवासि महः ॥१८०॥

असिताः कचाः केशा यस्य तत्, आयतान्यक्षीणि यस्य तत्, कुसुममेव शरो यस्य तत्; कूलमुद्वहा=कूलस्योत्क्षेपकारिणी कूलङ्कषा या कृपा तया आर्द्रम्; आदिमस्य रसस्य शृङ्गारस्य अधिदैवतम् अधिष्ठातृदेवतास्वरूपम्, हराङ्कवासि=हरस्य शिवस्य कामेश्वरस्याङ्के क्रोडे वसतीति तथोक्तं महः तेजः अन्तः—स्वचित्ते कलयामि—भावनया साक्षात्करोमि ॥१८०॥

*चवांसि इति—ख.

कर्णोपान्ततरङ्गित-
कटाक्ष*विस्पन्दिकण्ठदघ्नकृपाम् ।
कामेश्वराङ्कनिलयां
कामपि विद्यां पुरातनीं कलये ॥१८१॥

कर्णोपान्तं—कर्णौ यावत् तरङ्गिताः—स्पन्दमानाः ये कटाक्षाः—नेत्रप्रान्तदृष्टयः, तेभ्यः विस्पन्दिनी-प्रसरन्ती कण्ठदघ्ना=सुपरिपूर्णा कृपा यस्यास्ताम्, कामेश्वरस्य शिवस्याङ्कः एव निलयो यस्यास्ताम्, शिवाङ्कोपविष्टाम्, कामपि वर्णनायोग्यां पुरातनीं विद्यां पराशक्ति कलये अन्तर्ध्यायामि ॥१८१॥

अरविन्दकान्त्यरुन्तुद-
विलोचनद्वन्द्वसुन्दरमुखेन्दु** ।
छन्दः कन्दल‖मन्दिरम्
अन्तःपुरमैन्दुशेखरं वन्दे ॥१८२॥

अरविन्दस्य कमलस्य कान्तेः शोभायाः अरुन्तुदं=मर्मकृन्तकं यद् विलोचनयोर्नेत्रयोर्द्वन्द्वं तेनातीव सुन्दरो मुखेन्दुर्यस्य तत्, छन्दसाम् इच्छानां सिसृक्षादिरूपाणां यः कन्दलः समूहस्तस्य मन्दिर-

*निस्पन्दि इति मु.
**मुखेन्दुः—इति मु.
‖ कुन्तल इति क.

उद्यन् उदीयमानो यो दिनकरः सूर्यस्तद्वच्छोणवर्णान् उत्पलस्य कुमुदस्य यो बन्धुश्चन्द्रः कुमुदविकासकः, तस्य स्तनन्धयः=नवजातः शिशुश्चन्द्रकलात्मकः, स आपीडः शेखरो येषां तान्; करे कलितो गृहीतः पुण्ड्रमयः इक्षुकाण्डमयश्चापो यैस्तान्, कानपि वर्णनाशक्त्यतीतान्, कपर्दिनः शिवस्य प्राणान्—प्राणशक्तिभूतान् कलये—ध्यायामि। शक्तावेव हि शिवस्य शिवत्वनिर्वाहिका प्राणप्रतिष्ठा, तद्विना तस्य शवप्रायत्वात्। ततो ललिताख्या परा शक्तिस्तस्य प्राणतया गीयते ॥१८६।

रशनालसज्जघनया
रसनाजीवातु-चापभासुरया ॥
घ्राणायुष्करशरया
घ्रातं चित्तं कयापि वासनया ॥१८७॥

रशनया लसच्छोभमानं जघनं यस्यास्तया, रसनायाः जिह्वायाः जीवातुः=प्राणप्रदः, तस्यां स्वमाधुर्येण स्फुरत्तावाहक इक्षुकाण्ड एव चापो धनुस्तेन भासुरया—देदीप्यमानया; घ्राणेन्द्रियस्य आयुष्कराः तत् स्फूर्त्युत्तेजकास् तत्तुष्टिकराः पुष्पमयाः शरा यस्यास्तया, कयापि वाङ्मनोऽगोचरया वासनया, अचेतने मनसि स्थिरं संस्काररूपतया स्थितया परमेश्वरस्यैश्वर्यभूतया परादेव्यां ललितयाऽऽघ्रात=सुचुम्बितं सततं समाविष्टं मे चित्तम् ॥१८७॥

सैरसिजसैहयुध्वदृशा
शम्पालतिकासनाभिविग्रहया।
भासा कयापि चेतो
नासामणिशोभिवदनया भरितम् ॥१८८॥

सरसिजेन सार्धं योधनशीला दृग् यस्यास्तया, कमलस्पर्धिनेत्रया; शम्पालतिका=विद्युल्लता, तस्याः सनाभिः सहोदरो विग्रहः—शरीरं यस्यास्तयाऽत्यंन्तं देदेप्यमानशरीरया; नासायां धृतो यो मणिरलङ्कारस्पस्तेन शोभि=शोभमानं वदनं यस्यास्तया, कयापि वर्णनातीतया भासा मम चेतो भरित वर्तते। सा च भाः ललिताम्बाख्या पारमेश्वरी विमर्शरूपा पराशक्तिः ॥१८८॥

नवयावकाभसिचयान्वितया
　　गजयानया दयापरया।
धृतयामिनीशकलया
　　धिया कयापि क्षतामया हि वयम्* ॥१८९॥

नवं यद्यावकं रक्तवर्णद्रव्यं तस्याभेवाभा यस्य तथाभूतो यः सिचयो वस्त्रमरुणवर्णं तेनान्वितया; गजवद्गमनशीलया; दयापरया; धृता शिरसि यामिनीशस्य रात्रिनाथस्य चन्द्रस्य कला यया तया; कयापि वर्णयितुमशक्यया धिया सद्विमर्शरूपया वयं क्षतामयाः—क्षताः विनष्टा आमयाः क्लेशकर्मविपाकाशयां रोगाः येषां ते तथाभूताः ॥१८९॥

अलमलमकुसुमबाणै-
　　रबिम्बशोणैरपुण्ड्रकोदण्डैः।
अकुमुदबान्धवचूडै-
　　रन्यैरिह जगति दैवतम्मन्यैः ॥१९०॥

*अयंश्लोकः क पुस्तके नास्ति।

कुसमबाणरहितैः, विम्वफलवद्य शोणकान्तयो न भवन्ति तैः, न विद्यन्ते पुण्ड्रकोदण्डाः—इक्षुमयाश्चापा येषां तैः; न विद्यन्ते कुमुदबान्धवाः—चन्द्राः चूडासु शेखरेषु येषां तैः, अन्यैरिन्द्रोपेन्द्रादिभिः, इह जगति त्रिलोकीस्वरूपे संसारे दैवतम्मन्यैः—आत्मनः दैवतानि मन्यन्ते इति तथाभूतैर्मिथ्यादेवत्वाभिमानगर्वितैरवरैर्देवैः अलमलम्, न तेषु देवत्वबुद्धिः परभोगमोक्षदानफला कदाचिपि कार्येति ॥१९०॥

कुवलयसदृक्षनयनैः
　　कुलगिरिकूटस्थबन्धुकुचभारैः ।
करुणास्पन्दिकटाक्षैः
　　कवचितचित्तोऽस्मि कतिपयैः कुतुकैः ॥१९१॥

कुवलयसदृक्षाणि त्रीणि नयनानि येषां तैः, कुलगिरीणां विन्ध्यादीनां कूटस्थं समूहात्मकं यद्रूपं, तत्सदृशः कुचभारो येषां तैः, करुणया स्पन्दमानाः कटाक्षा येषां तैः, कतिपयैः कुतुकैः—कौतुकभूतैराश्चर्यमयैः पराशक्तिस्वरूपैरहं कवचितचित्तः—समाविष्टचित्तोऽस्मि ॥१९१॥

नतजनसुलभाय नमो
　　नालीकसनाभिलोचनाय नमः ।
नन्दितगिरिशाय नमो
　　महसे नवनीपपाटलाय नमः ॥१९२॥

नतजनाः भक्तास्तेभ्यः सुलभाय महसे पराशक्तिरुपाय नमः; नालीकं—नाले भवं कमलं तत् सनाभि=तत् सदृशं लोचनं—नेत्रत्रयं यस्य तस्मै महसे नमः; नन्दितः आनन्दितो गिरिशः शिवो येन तस्मै महसे नमः, नवं यन्नीपकुसुमं, रक्तकदम्बपुष्पं, तद्वत् पाटलाय, श्वेतरक्तकान्तिमण्डिताय महसे ललितादेवीस्वरूपाय पराशक्त्यात्मक-परविमर्शाय नमः, नीपपदं बन्धूकाशोकादीनामपि वाचकम् । तेन नवनीपपाटलाय—अभिनवविकसितबन्धूकाशोकादिवत् पाटलाय महसे नमः ॥१९२॥

**कादम्बकुसुमदाम्ने***
**कायच्छायाकणायितार्यम्णे ।**
**सीम्ने चिरन्तनगिरां**
**भूम्ने कस्मैचिदाददे प्रणतिम् ॥१९३॥**

कदम्बकुसुम-निर्मितं दाम माला यस्य तस्मै, कायस्य शरीरस्य-च्छायया कान्त्या कणायितः=अङ्गारकणतुल्यतां प्रापितोऽर्यमा सूर्यो येन तस्मै, यस्य तेजसः पुरतः सूर्योऽङ्गारकण इवावभासते इति; चिरन्तनगिराम् निगमादिवाचां सीम्ने–पर्यन्तभूते, यत्र तासां गिरां गतिरेव नास्तीति; कस्मैचिदचिन्त्याय वर्णयितुमशक्याय च भूम्ने—बृहते-ऽपरिमितायानवच्छिन्नाय तत्त्वाय प्रणतिमाददे—तत्तत्त्वं नमस्करोमि ॥१९३॥

**कुटिलकबरीभरेभ्यः**
**कुङ्कुमसब्रह्मचारिकिरणेभ्यः ।**

*धाम्ने इति मुद्रितं पुस्तके पाठोऽशुद्धः ।

कूलङ्कषस्तनेभ्यः
कुर्मः प्रणतिं कुलाद्रिकुतुकेभ्यः ॥१९४॥

कुटिलः कुञ्चितः कबरीभरः—संयतकेशभारो येषां तेभ्यः, कुङ्कुमं-काश्मीरजं, तस्य सब्रह्मचारिणः सखायस्तत्सदृशकान्तियुक्ताः किरणा येषां तेभ्यः; कूलङ्कषौ—तटप्रदेशघातिनौ स्तनौ येषां तेभ्यः; कुलाद्रेः—हिमालयपर्वतस्य कुतुकेभ्यः कौतुकभूतकन्यात्मकेभ्यः प्रणतिं वयं कुर्मः ॥१९४॥

कोकनदशोणचरणात्
कोमलकुरलालिविजितशैवालात् ।
उत्पलसगन्धि*नयनाद्
उररीकुर्मो न देवतामन्याम् ॥१९५॥

ककोनदवत्—रक्तकमलवच्छोणावरुणौ चरणौ यस्य तस्मात्; कुरलाश्चूर्णकुन्तला इति धरणी । कोमला या कुटिलानां-केशानामालिः श्रेणिस्तया विजितं शैवालं येन तस्मात्, उत्पलस्य—कमलस्य सगन्धी=समानगन्धयुक्ते, अत्यन्तसादृश्येन तत्सजातीये, नयने नेत्रे यस्य तस्माद् अन्यां कामपि देवतां नोररीकुर्मः, न तां देवतात्वेन स्वीकुर्मः ॥१९५॥

**सुगन्धि—इति मुद्रितें पुस्तकेऽशुद्धः पाठः ।

आपाटलाधराणाम्
　　आनीलस्निग्धबर्बरकचानाम् ।
आम्नायजीवनानाम्
　　आकूतानां हरस्य दासोऽहम् ॥१९६॥

आपाटलौ—अतितरां पाटलवर्णौ—अधरौ येषां तेषाम्; आनीलाः—अत्यन्तश्यामलाः स्निग्धाश्च वर्बराख्यं किमपि वनौषधं तत्सदृशस्निग्धश्यामलाः कचाः केशाः येषां तेषाम्; आम्नायानां निगमागमादिशास्त्राणां जीवनभूतानां; हरस्य शिवस्य आकूतानां—सृष्ट्यादिकृत्यपञ्चकोन्मुखानामभिप्रायभूतानां शिवैश्वर्यमयानां दैवतानामहं दासोऽस्मि ॥१९६॥

पुङ्खितविलासहास-
　　स्फुरितासु पुराहिताङ्कनिलयासु ।
मग्नं मनो मदीयं
　　कास्वपि कामारिजीवनाडीषु ॥१९७॥

पुङ्खिताः=पुङ्खवत् परितः प्रसृताः विलासाः सृष्ट्यादिपञ्चकृत्यलीलाः, तत्कृताश्च ये हासाः—हर्षानुसारिणः स्पन्दास्ते एव स्फुरितानि-स्फुरत्तात्मकैश्वर्यविजृम्भितानि यासां तासु; पुराहितः=त्रिपुरासुरस्य शत्रुः शिवस्तस्याङ्कः एव निलयो यासां तासु, कामेश्वराङ्कोपविष्टासु, कामारेः शिवस्य कास्वप्यवाङ्मनसगोचरासु जीवनाडीषु=शिवत्वनिर्वाहकशक्तिसमूहैकघनरूपासु ललितादेव्यात्मकेषु मदीयं मनो मग्नं ध्यानलग्नं वर्तते ॥१९७॥

ललिता पातु शिरो मे
ललाटमम्बा च मधुमतीरूपा ।
भ्रूयुग्मं च भवानी
पुष्पशरा पातु लोचनद्वन्द्वम् ॥१९८॥

ललिता नाम शिवैश्वर्यभूता तस्य शिवत्वनिर्वाहिका परा शक्तिः, सा मे शिरः पातु । मधुमतीरूपाऽम्बा मे ललाटं पातु । स्पष्टमन्यत् । इतः कवचप्रायः स्तवस्यांशः सर्वोऽपि स्फुटप्राय एव । तैस्तैर्नामभिस्तैस्तैश्चाकारैः शिवस्य शिवत्वं निर्वहन्ती भगवती पराशक्तिरेव तत्तद्देवीरूपतया विलसन्ती मे तत्तदङ्गादिकं रक्षत्विति सर्वत्र योज्यम् । २०५ तमं पद्यं यावत् कवचात्मिका स्तुतिरियम् ॥१९८॥

पायान्नासां बाला
सुभगा दन्तांश्च सुन्दरी जिह्वाम् ।
अधरोष्ठमादिशक्ति-
श्चक्रेशी पातु मे चिरं चिबुकम् ॥१९९॥

चक्रेशी तावत् शक्तिचक्रस्येश्वरी ॥१९९॥

कामेश्वरी च कर्णौ
कामाक्षी पातु गण्डयोर्युगलम् ।

शृङ्गारनायिकाव्याद्

वदनं सिंहासनेश्वरी च गलम् ॥२००॥

सृष्ट्यादिपञ्चकृत्यरूपमैश्वर्यं विजृम्भितं प्रति या परमेश्वरस्योन्मुखतात्मिकेच्छा सैव तस्य कामः । तेनैवासौ कामेश्वरः । तस्य परमेश्वरताप्रयोजिका पारमेश्वरी पराशक्तिरेव बहिर्मुखविलासतत्परा सती कामेश्वरी । सैवावस्थाविशेषे कामाक्षी । शिवशक्त्यात्मकसंघट्टावस्थायां परस्परौन्मुख्यरसनिभरा सती सैव शृङ्गारनायिका । सा मे वदनमव्याद्—रक्षतु ॥२००॥

स्कन्दप्रसूश्च पातु

स्कन्धौ बाहू च पाटलाङ्गी मे ।

पाणी च पद्मनिलया

पायादनिशं नखावलीर्विजया ॥२०१॥

कोदण्डिनी च वक्षः

कुक्षिं चाव्यात् कुलाचलतनूजा ।

कल्याणी च वलग्नं

कटिं च पायात् कलाधरशिखण्डा ॥२०२॥

कुलाचलस्य हिमालयस्य तनूजा—पार्वती । वलग्नम्—अवलग्नं मध्यभागं शरीरस्य । कलाधरश्चन्द्रः शिखण्डे चूडायां यस्याः सा ॥२०२॥

ऊरुद्वयं च पायाद्-

उमा मृडानी च जानुनी रक्षेत् ।

जङ्घे च षोडशी मे

पायात् पादौ च पाशसृणिहस्ता ॥२०३॥

पाशसृणिहस्ता—पाशाङ्कुशधरा ॥२०३॥

प्रातः पातु परा मां

मध्याह्ने पातु मणिगृहाधीशा ।

शर्वाण्यवतु च सायं

पायाद्रात्रौ च भैरवी साक्षात् ॥२०४॥

मणिगृहस्य—चिन्तामणिनिर्मितस्य कामेश्वरभवनस्य अधीशा। भैरवी–विश्वभरणशीला, विश्वं प्रति पञ्चकृत्यक्रीडात्मकरमणशीला, विश्ववमनशीला च सृष्ट्युन्मुख्यतया ॥२०४॥

भार्यां रक्षतु गौरी

पायात् पुत्रांश्च बिन्दु*गृहपीठा ।

श्रीविद्या च यशो मे

शीलं चाव्याच्चिरं महाराज्ञी ॥२०५॥

*बन्धुगृह इति—क.

बिन्दुगृहं=श्रीचक्रमध्यबिन्दुरेव गृहं तदेव पीठं यस्याः सा, श्रीचक्रमध्यबिन्दुनिवासिनी ॥२०५॥

पवनमयि पावकमयि
क्षोणीमयि गगनमयि कृपीटमयि ।
रविमयि शशिमयि दिङ्मयि
समयमयि प्राणमयि शिवे पाहि ॥२०६॥

कृपीटमयि=वह्निमयि, समयमयि=विधिनिषेधादिशास्त्र-नियममयि ॥२०६॥

कालि कपालिनि शूलिनि
भैरवि मातङ्गि पञ्चमि त्रिपुरे ।
वाग्देवि विन्ध्यवासिनि
बाले भुवनेशि पालय चिरं माम् ॥२०७॥

पञ्चानां मकाराणां समाहारः पञ्चमी, तद्रूपिणि चर्यात्मक-साधनारूपे ॥२०७॥

अभिनवसिन्दूराभाम्-
अम्ब त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषाम्
उत्पलनयनाकटाक्षकल्लोलाः ॥२०८॥

इतो २१२तमं पद्यं यावद् भगवत्या आराधनस्य विविधफल-प्रदत्वं वर्ण्यते। हे अम्ब ये त्वामभिनवसिन्दूरवच्छोणवर्णां हृदये ध्यायन्ति तेषामुपरि उत्पलनयनानां–कमलनेत्राणां सुन्दरीणां कटाक्ष-कल्लोला निपतन्ति। तैस्तथाविधं मनोहरं सौन्दर्यमवाप्यते येन त्रिभुवनसुन्दरीणां मनो हरन्ति ॥२०८॥

वर्गाष्टकमिलिताभि-
वशिनीमुख्याभिरावृतां भवतीम्।
चिन्तयतां सितवर्णां
वाचो निर्यान्त्ययत्नतो वदनात् ॥२०९॥

देवीनां वर्गस्याष्टकेन मिलिताभिर्वशिनीप्रभृतिभिरावृतां सितवर्णां भवतीं ये ध्यायन्ति तेषां वदनादयत्नत एव काव्यशास्त्र-मय्यो वाचो निर्यान्ति। २०९॥

कनकशलाकागौरीं
कर्णव्यालोलकुण्डलद्वितयाम्।
प्रहसितमुखीं च भवतीं
ध्यायन्तो ये त एव भूधनदाः ॥२१०॥

तप्तस्वर्णशलाकावद्गौरवर्णां कुण्डलविभूषितकर्णयुगलाम्, सस्मितमुखीं च ये त्वां ध्यायन्तो जना भवन्ति ते एव भुवि पृथिव्यां धनदाः कुबेराः, कुबेरतुल्याः धनाधिपतयो भवन्ति ॥२१०॥

शीर्षाम्भोरुहमध्ये
शीतलपीयूषवर्षिणीं भवतीम् ।
अनुदिनमनुचिन्तयताम्
आयुष्यं भवति पुष्कलमवन्याम् ॥२११॥

शीर्षे सहस्रारे ये भगवतीं शुभ्रवर्णां शीतलममृतं वर्षन्तीं पुनः पुनर्ध्यायन्ति ते दीर्घायुषो भवन्ति, चिरजीविनोऽपि । ॥२११॥

मधुरस्मितां मदारुणनयनां
मातङ्गकुम्भवक्षोजाम् ।
चन्द्रावतंसिनीं त्वां
सविधे पश्यन्ति सुकृतिनः केचित् ॥२१२॥

मधुरं स्मितं यस्यास्तां मदनारुणे नयने यस्यास्तां, मातङ्गो हस्ती तस्य कुम्भाविव वक्षोजौ स्तनकलशौ यस्यास्ताम्, चन्द्र एवावतंसो शिरोभूषणं तद्वतीं त्वां सविधे पुरतः केचिदेव परमसुकृतिनः पश्यन्ति ॥२१२॥

ललितायाः स्तवरत्नं
ललितपदाभिः प्रणीतमार्याभिः ।
प्रतिदिनमवनौ पठतां
फलानि वक्तुं प्रगल्भते सैव ॥२१३॥

ललितानि—वृत्त्यनुप्रासबहुलत्वेन श्रुतिमधुराणि पदानि यासां ताभिरार्याभिः प्रणीतं—निर्मितं ललितादेव्याः इदं स्तोत्रं प्रतिदिनं पठतां भक्तानामत्रैवावृत्तौ अस्मिन्नेव जन्मनि लभ्यानि यानि चतुर्वर्गप्राप्तिरूपाणि फलानि तानि गणयितुं सा भगवती ललितैव प्रभवति—समर्थास्ति, नास्मादृशाः कवयः ॥२१३॥

**सदसदनुग्रहनिग्रह-**
**गृहीतमुनिविग्रहो भगवान् ।**
**सर्वासामुपनिषदां**
**दुर्वासा जयति देशिकः प्रथमः*** ॥२१४॥

सत्सु योऽनुग्रह-असत्सु च यो निग्रहस्तदुभयं विधातुं गृहीत-मुनिविग्रहः—मुनिशरीरं धृत्वा पृथिव्यामवतीर्णः सर्वासां चोप-निषदां—रहस्यभूतानां मोक्षविद्यानां प्रथमः—प्राक्तनः, श्रेष्ठो वा देशिको—गुरुर्भगवान् दुर्वासाः जयति—सर्वोत्कर्षेण वर्तते, तं प्रति च वयं सर्वे प्रणताः इति ॥२१४॥

इति श्री भगवता दुर्वाससा विरचितं ललितास्तवरत्नं
समाप्तम् ।

ऋत्वाशुगवियद्बाणे शुभे सप्तर्षिवत्सरे ।
कार्तिकस्य सिते पक्षे सप्तम्यां शुक्रवासरे ॥
बलजिन्नाथविदुषा पण्डितोपाह्वयेन व ।
ललितास्तवरत्नस्य टीका लघ्वी विनिर्मिता ॥

—०—

*एतत् पद्यं पाण्डुलिपिषु मुद्रितसंस्करणे चानुपलभ्यमान-मपि भगवता दुर्वाससा निर्मिते स्तोत्रान्तरद्वये लभ्यमानं सदत्रापि स्थितिमर्हति । स्तोत्रपाठकैर्निर्माय योजिता स्यादियमार्या ।



## श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठस्य प्रकाशनानि

| क्रम सं० | प्रकाशनम् | सं०/लि० | मूल्यम् |
|---|---|---|---|
| १ | काश्मीर शैव दर्शन | डा० बलजिन्नाथ पण्डित: | ३०-०० |
| २ | विक्रमांकदेवचरितस्य साहित्यिकं सर्वेक्षणम् | डा० प्रियतमचन्द्र शास्त्री | ३०-०० |
| ३ | जैन जीवन दर्शन की पृष्ठभूमि | डा० दयानन्द भार्गव | २०-०० |
| ४ | ऋचारहस्यम् | डा० दयानन्द भार्गव: | २०-०० |
| ५ | ग्रहलाघवम् (पहला भाग) | डा० रामचन्द्र पाण्डेय: | १२-५० |
| ६ | न्याय-सार-विचार: | डा० उमारमण झा | २१-०० |
| ७ | दश पदार्थी | डा० उमारमण झा | १३-५० |
| ८ | ग्रहलाघवम् (दूसरा भाग) | डा० रामचन्द्र पाण्डेय: | २०-८० |
| ९ | ज्योतिषरत्नमाला | श्री बिहारी लाल शास्त्री | ३६-२५ |
| १० | रघुनाथगुणोदय: | डा० गंगादत्त विनोद: | २७-१५ |
| ११ | परमार्थसार: | आचार्याभिनवगुप्तकृत; श्री द्वारिकानाथ शास्त्रीकृत चन्द्रिकाटिप्पणी विभूषितश्च | १५-३५ |
| १२ | दुर्घटवृत्तिप्रतिसंस्कार: (यन्त्रस्थ) | श्रीयशपाल खजूरिया | |